ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

३८ वर्षे द्वितीय-तृतीयाङ्कौ: (अप्रैल-जुलाईमासाङ्कौ:) २०१३ ई०

प्रधानसम्पादक:
प्रो० भवेन्द्रझा
कुलपति:

सम्पादक:
प्रो० रमेशकुमारपाण्डेय:

सहसम्पादक:
डॉ० ज्ञानधरपाठक:



प्रकाशन-स्थलम्
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालय:)
नवदेहली-११००१६

ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

## (A REFEREED QUARTERLY RESEARCH JOURNAL)

३८ वर्षे द्वितीय-तृतीयाङ्कौ: (अप्रैल-जुलाईमासाङ्कौ:) २०१३ ई०

प्रधानसम्पादक:

प्रो० भवेन्द्रझा

कुलपति:

सम्पादक:

प्रो० रमेशकुमारपाण्डेय:

सहसम्पादक:

डॉ० ज्ञानधरपाठक:



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालय:)

नवदेहली-११००१६

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया,
नवदेहली-११००१६



ISSN :- 0974 - 8946

३८ वर्षे द्वितीय-तृतीयाङ्कौः (अप्रैल-जुलाईमासाङ्कौः) २०१३ ई०



मुद्रकः
अमरप्रिंटिंगप्रैसः
दिल्ली
amarprintingpress@gmail.com

प्रधानसम्पादकः

**प्रो० भवेन्द्रझा**

कुलपतिः

**सम्पादकः**

प्रो० रमेशकुमारपाण्डेयः

**सम्पादकमण्डलम्**

प्रो० (श्रीमती) अमिता शर्मा

प्रो० जयकान्तसिंहशर्मा

प्रो० हरेरामत्रिपाठी

**सहसम्पादकः**

डॉ० ज्ञानधरपाठकः

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रियसंस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# पुरोवाक्

अध्यात्मपरायणा त्यागमूला समन्वयात्मिका सहिष्णुतासंयुता भारतीयसंस्कृतिः विश्वस्मिन् विश्वे अनुपमा वर्तते। 'वसुधैव कुटुम्बकम्', 'यत्र विश्वं भवत्येकनीडम्', 'मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे', संगच्छध्वं संवदध्वम्--"सर्वे भवन्तु सुखिनः" इत्यादिवाक्यख्यापितायाः विश्वबन्धुत्वभावनायाः परिकल्पना अस्याः सर्वातिशायि महत्त्वं द्योतयति। सम्प्रति सर्वे देशा भूमण्डलीकरणाय प्रयतन्ते। विविधराष्ट्रेषु ऐक्यं विचारसाम्यं सहभागित्वं समन्वयं सहिष्णुतां पारस्परिकसद्भाववृत्तिञ्च प्रतिष्ठापयितुं प्रयासो विधीयते।

संसारेऽस्मिन् विलसन्ति स्वाभिप्रायाभिव्यक्तिसाधनभूता विभिन्नाभाषाः। तासु भाषासु संस्कृतभाषा सर्वोपरि वर्तते। केचन विदेशीया विद्वांसः इयं मृतभाषा इतिप्रचारमकुर्वन्। इयं भाषा न कदापि व्यवहारभाषा आसीदिति तेषां मतम्। परं यदि वयं प्राचीनसंस्कृतव्याकरणसाहित्यादिशास्त्रग्रन्थान् सम्यगवलोकयामः तदा अस्माभिरिदं स्पष्टतयाऽवगम्यते यदियं भाषा व्यवहारभाषा आसीदिति। भगवता पाणिनिना स्वीयाष्टाध्याय्यां च्छन्दसि, भाषायाम् इति विभागं कृत्वैव शब्दानामन्वाख्यानमक्रियत। अत्र भाषा नाम लौकिकी भाषा एवं या लौकिकी भाषा सैव व्यावहारिकी भाषा इत्यर्थः। भगवता पतञ्जलिना विरचितमहाभाष्यादपि स्पष्टं प्रतीयते यत् संस्कृतं भाषितभाषा आसीदिति।

परकीयशासनवशात् जीवन्त्याः अपि अस्याः देववाण्याः अभिवृद्धिकार्यं किञ्चित् कुण्ठितमासीत्। अस्याः भाषायाः अभिवृध्यै स्वातन्त्र्योत्तरभारते सर्वकारेण स्वयंसेवासंस्थाभिश्च नैके कार्यक्रमाः समायोजिताः सन्ति। अद्यावधि यावद्धनं व्ययीकृतं सर्वकारेण यावान् प्रयत्नः विहितः स्वयंसेवासंस्थाभिः तावदभिवृद्धिः संस्कृतस्य न संजाता इति चेखिद्यते न श्चेतः।

संस्कृते न केवलं काव्यसाहित्यविषयकाः ग्रन्थाः सन्ति। परं ज्योतिषशास्त्र-पाकशास्त्र-अर्थशास्त्र-राजनीतिशास्त्रादिविषयकाः ग्रन्था अपि सन्ति। एवमेव भौतिकविज्ञान-रसायनविज्ञान-वैद्यकविज्ञान-खगोलविज्ञान-भूविज्ञान-धातुरसायन-विज्ञान-विषयकाः ग्रन्थाः सन्ति। तेषां विषये विद्यापीठे अनुसन्धानम् भवेत्। एवमेव तादृशग्रन्थानां प्रकाशनार्थमपि विद्यापीठे व्यवस्था भवेत् तादृशः प्रयत्नो विधीयते।

शोधप्रभायाः प्रकाशनसदुद्यमे अनुत्तमं कौशलं प्रकटीकृतवन्तः शोधप्रभासम्पादकाः आचार्यरमेशकुमारपाण्डेयाः समं च सर्वेऽस्या अनुसन्धातारो लेखकाः साधुवादपात्रं सन्ति। इतश्च भूयोऽपि समुज्ज्वलं शास्त्रादिचिन्तनप्रभा शोधप्रभा प्रकटीकरिष्यतीत्याशासे।

**प्रो. भवेन्द्रझा**

**कुलपतिः (प्रभारी)**

# सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

शोधशब्दस्य कृते अनुसन्धानशब्दस्यापि प्रयोगः विधीयते। अयं प्रश्नः जागर्ति, यत् शोधो नाम किम्? तदा विचार्यते -- नवीनतथ्यानामुद्घाटनम् अथवा पूर्वत एव अवगतानां तथ्यानां नवीनप्रणाल्या प्रतिपादनमेव सामान्यतया अनुसन्धानस्य अर्थ अस्ति। पाण्डुलिपीनां सम्पादनं तथा कोशग्रन्थसम्बद्धकार्याणि अपि प्रकारान्तरेण उपर्युक्तविधासु समाविष्टानि भवितुम् अर्हन्ति। शोधस्य विषयः उपाधिसापेक्ष उपाधिनिरपेक्षो वा भवेत्, तत्र एको निश्चितः क्रियाविधिरपेक्षितो भवति। कस्मिन्नपि विषयविशेषे शोधस्य कार्यं स्वतः स्फूर्तमपि भवितुमर्हति अन्यप्रेरितमपि। उभयथापि प्रायः शोधकर्त्तुः सामान्यात् विशेषं प्रति, ज्ञाताद् अज्ञातं प्रति, समष्टितः व्यष्टिं प्रति, प्रसृतात् स्रोतसं प्रति, अथवा अपेक्षाकृतसन्धिग्धात् अपेक्षाकृतनिश्चितं प्रति अभिमुखीभवनम् आवश्यकं भवति। केचिद् विशिष्टशोधकर्त्तारः अत्र विषये व्यतिक्रमेणापि गन्तुं प्रभवन्ति। साहित्य-दर्शनादिसंस्कृतवाङ्मये शोधकार्ये प्रवृत्ता अनुसन्धातारः प्रायः पूर्वमार्गस्यैव अनुसरणं कुर्वन्ति। सभ्यमानवस्य अधिकानि कार्याणि प्रायः येन भावनाद्वयेन प्रेरितानि भवन्ति, तत्र प्रथमा भावना भवति-- 'स्वीयसुन्दरसुखदास्तित्वनिर्माणस्य' द्वितीया च 'वर्तमान-भाविजनेषु स्वव्यक्तित्वबोधस्थापनस्य'। निष्कामकर्मयोगेऽपि स्वस्य कृते न स्यात्; परम् अन्येषां कृते तु यत्किमपि उद्देश्यं भवत्येव।

अनुसन्धानकार्याय सर्वस्मादावश्यकस्त्वभिनिवेशः वर्तते। अभिनिवेशं विनानुसन्धानकार्यमसम्भवमेव भवति। प्रायेणैवं दृश्यते यदुत्तमोत्तमा अपि विद्यार्थिनो मनोवृत्तिप्रतिकूलं विषयं गृह्णन्ति। तेषु कतिपय एव ईदृशाः भवन्ति, ये स्वकीयसंयमाध्यवसायादिगुणैः तस्य विषयस्य निर्वाहं कर्तुं प्रभवन्ति, अधिकांशास्तु तं विहाय ततो विरता एव जायन्ते। मनोरुचिप्रतिकूलविषये साभिनिवेशता समुत्पादयितुं न शक्नुवन्ति, तेन, विना चानुसन्धानकार्यं कथं भवेत्? तेभ्यस्तु तत्कार्यं पर्वतभङ्गवत् कठिनं जायते; किन्तु तदेव कार्यं तद्विषये प्राप्तसहजरुचये मनोरमं भवति। अतोऽभिनिवेशः यं विषयं प्रति जागरूको भवेत् वर्तेत वा, स एव अनुसन्धित्सुना ग्रहीतव्यः, निर्देशकेनापि चात्रावधानमवश्यं देयम्। प्रयोजनं विना अभिनिवेशोऽपि न जायते।

शोधप्रभायाः संयुक्ताङ्के विविधविषयविश्लेषपराः षोडश लेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**
**सम्पादकः**

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग

## English Section

# भोजराजाग्निपुराणकारयोर्निरूपितरसतत्त्वस्य तुलनात्मकं समीक्षणम्

डॉ. सुमनकुमारझाः

साहित्यशास्त्रस्य विवेच्यतत्त्वेषु रसतत्त्वं सर्वतोभावेन प्रामुख्यं भजते। यतो हि रसतत्त्वं काव्यस्यात्मतत्त्वमिति निर्विवादो विषयः। आभरताद् आधुनिककालपर्यन्तं ये-ये काव्यशास्त्रिणोऽभूवन् ते सर्वे आचार्याः काव्येषु रसतत्त्वस्य प्राधान्यं स्वीकुर्वन्ति। ध्वनिकारादनन्तरं काव्यस्यात्मा रसः, तत्रापि रसध्वनिरेव काव्यस्यात्मा इति स्थापितः। अस्य रसतत्त्वस्य स्वरूपं प्रायशः सर्वे साहित्यशास्त्रीयाचार्याः स्व-स्वदृष्ट्या प्रतिपादितवन्तः। तत्र रसस्वरूपनिरूपणसन्दर्भे भोजराजाग्निपुराणकारयोः चिन्तनमभिनवं विलक्षणं मौलिकञ्च प्रतिभाति। यद्यपि द्वयोर्मध्ये कः पूर्ववर्तीत्यस्मिन्विषये विद्वत्सु विप्रतिपत्तयो दृश्यन्ते। अतएव शोधपत्रेऽस्मिन् मया द्वयोः पूर्वापरक्रमं विहाय तत्र तत्र वर्णितस्य रसतत्त्वस्य किमभिनवत्वं किञ्च मौलिकत्वमपि च द्वयोः रसतत्त्वनिरूपणप्रसङ्गे कुत्र साम्यं कुत्र च वैषम्यमेतत्सर्वमुपस्थाप्यते। महाराजभोजप्रणीतौ द्वौ साहित्यशास्त्रीयग्रन्थौ प्राप्येते, सरस्वतीकण्ठाभरणं शृङ्गारप्रकाशश्च। यद्यपि एतयोर्द्वयोर्ग्रन्थयोः रसतत्त्वविवेचनमुपलभ्यते, तथापि शृङ्गारप्रकाशस्थं रसतत्त्वविवेचनं विशिष्टमेव। तत्र रसावियोगनामके एकादशप्रकाशे रसस्यापरनाम शृङ्गाराभिमानाहङ्कारतत्त्वस्य सविस्तरं निरूपणं प्राप्यते। तन्निरूपणं व्यावहारिकं वैज्ञानिकं तार्किकञ्चास्ति।

अष्टादशपुराणेषु अग्निपुराणस्य महत्त्वं प्रथितमेव। पुराणेऽस्मिन् एकादशस्वध्यायेषु प्रायशः सर्वेषां काव्यशास्त्रीयविषयाणां प्रतिपादनं प्राप्यते। तेषु विषयेषु रसस्वरूपविमर्शो वैशिष्ट्यं दधाति। अग्निपुराणे रसनिरूपणविषये स्वतंत्रविचारसरणिः दृश्यते। सा विचारसरणिः विलक्षणा नवीना च प्रतीयते। अग्निपुराणानुसारं वेदान्तेषु यदक्षरं सनातनमजं चैतन्यमीश्वरमिति परब्रह्मणः ज्योतिर्मयं स्वरूपं प्रतिपादितमस्ति, तस्याक्षरस्य अजस्य अद्वितीयस्य चैतन्यस्वरूपस्य ज्योतिर्मयस्य परब्रह्मणः सहजानन्दः कदाचिदेवाभिव्यज्यते। साऽऽनन्दरूपाऽभिव्यक्तिः चैतन्यं चमत्कारो रस इति व्यपदेशं भजते। यथा-

**अक्षरं परमं ब्रह्म सनातनमजं विभुम्।**
**वेदान्तेषु वदन्त्येकं चैतन्यं ज्यौतिरीश्वरम्॥**

**आनन्दः सहजस्तस्य व्यज्यते स कदाचन।**
**व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वयः।।**[1]

इत्थं परब्रह्मणः चैतन्यानन्दरूपाभिव्यक्तिरेव रसः। तस्य परब्रह्मणश्चैतन्यस्याद्यो विकारो गुणत्रयवैषम्यरूपः महानिति नाम जीवात्मा स्मृतः। तस्य द्वितीयो विकारोऽभिमानो अहङ्कारो नाम। तस्मिन्नहङ्कारे सर्वमिदं भुवनत्रयं परिसमाप्यते ततोऽस्मादेवाभिमानाद्रतिरुत्पद्यते। सा रतिः परिपोषमुपेयुषी व्यभिचार्यादिसामान्यगुणयोगात् शृङ्गार इति नाम रसो गीयते। यथा चोक्तमग्निपुराणे-

**आद्यस्तस्य विकारो यः स महानिति स्मृतः।**
**ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम्।।**

**अभिमानाद्रतिः सा च परिपोषमुपेयुषी।**
**व्यभिचार्यादिसामान्याच्छृङ्गार इति गीयते।।**[2]

अग्निपुराणानुसारमभिमानो अहङ्कारस्यैव प्रतिरूपः। अभिमतः मनोऽनुकूलत्वात्सोऽभिमान उच्यते। अत्र सर्वाः सुखदुःखात्मिकानुभूतय आनन्दरूपा एव। अभिमानोऽत्र आत्मस्थितः विशेषो गुणः न तु उत्तेजनाजन्यो मिथ्यागर्वः। अस्यैव अहङ्कारस्यापरं नामाभिमानो शृङ्गारो वा। अयं मानवान् शृङ्गं नयत्यतएव 'शृङ्गारो' कथ्यते। अयं शृङ्गारः मानवस्यात्मनिष्ठं प्रेम एव, न तु वासनात्मको भावः। अग्निपुराणे प्रतिपादितोऽयमहङ्कारोऽभिमानो वा रसः, स एव शृङ्गारः, शृङ्गार एव रसः। अस्मादेव शृङ्गाराद् हास्यादयोऽन्ये रसाः जायन्ते।यथा-**'तद्भेदाः काममितरे हास्याद्याप्यनेकशः।'** [3]

इत्थमग्निपुराणानुसारं सर्वे रसाः रतिमूलाः, रतेर्मूलमहङ्कारः यो हि मनोविकारादभिमानादुत्त्पद्यते। तन्मतेऽहङ्कारस्यैव विकारश्चमत्काररूपो रसः।

साहित्यशास्त्रे भोजराज-शारदातनयप्रभृतिभिराचार्यैः रसतत्त्वस्याभिनवं विवेचनं प्रस्तूयते। विश्वनाथाचार्यस्य रसस्वरूपकथनेऽग्निपुराणस्य प्रभावो परिलक्ष्यते। यथा-

**सत्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।।**

**लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः।।**[4] इति अपि च

---

1. अग्निपुराणोक्तं काव्यालङ्कारशास्त्रम्-4/1,2,पृ0-71
2. तत्रैव-4/3,4, पृ0-73
3. तत्रैव-4/5, पृ0-75
4. साहित्यदर्पणम्-3/2,3

रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।[5]

भोजराजेनापि अहङ्कारापरपर्यायोऽभिमान एव रसः इति स्वीक्रियते। यथा चोक्तं सरस्वतीकण्ठाभरणे-

रसोऽभिमानोऽहङ्कारः शृङ्गार इति गीयते।
योऽर्थस्तस्याऽन्वयात् काव्यं कमनीयत्वमश्नुते॥[6]

शृङ्गारप्रकाशस्य एकादशप्रकाशे रसावियोगनिरूपणप्रसङ्गे भोजराजस्य अपूर्वं चिन्तनं दृश्यते। तत्र रसतत्त्वस्य लक्षणमित्थं प्रतिपादितमस्ति-

**शृङ्गारो हि नाम विशिष्टेष्टदृष्टचेष्टाभिव्यञ्जकानाम् आत्मगुणसम्पदामुत्कर्षबीजं बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्काराद्यतिशयहेतुरात्मनो- ऽहङ्कारगुणविशेषः सचेतसा रस्यमानो रस इत्युच्यते। यदस्तित्वे रसिकोऽन्यथात्वे नीरस इति॥** [7]

वस्तुतः सहृदयजनेषु तत् तत्त्वं किम्? येन सहृदयैः[8] रसानुभूतिः क्रियते इत्यस्य प्रश्नस्य तार्किकं व्यावहारिकञ्चोत्तरं प्रदत्तं भोजराजेन। सूक्ष्मचिन्तनेन तथ्यमिदं सत्यं प्रतिभाति यदभिमानतत्त्वेन, अहङ्कारतत्त्वेनैव अस्माभिर्भावानुभूतिः क्रियते। यदि तदभिमानतत्त्वं मनसि न स्यात् चेत्, जीवनं प्रत्युदासीनत्वमेव। ततो एवोत्साहस्यागमनं भवीति, तेनोत्साहेनैव कार्यसिद्धिरिति। भोजेन आत्मनोऽहङ्कारविशेषो एव शृङ्गारः स्वीक्रियते। यो हि सहृदयैः रस्यमानो रस उच्यते। अयमहङ्कार एव रत्यादिभावान् जनयति-

अप्रातिकूलिकतया मनसो मुदादेर्यस्संविदोऽनुभवहेतुरिहाभिमानः।
ज्ञेयो रसः स रसनीयतयाऽऽत्मशक्तेः रत्यादिभूम्नि पुनर्वितथा रसोक्तिः॥

न रत्यादिभूमा रसः। किं तर्हि? शृङ्गारः।[9]

भोजराजप्रतिपादितस्यायमहङ्कारः सहजात्मानुरागस्य द्योतकः। रसं त्विह प्रेमाणमेवामनन्ति। सर्वेषामपि रत्यादिप्रकर्षाणां रतिप्रियो रणप्रियो अमर्षप्रियः परिहासप्रिय इति प्रेमण्येव पर्यवसानात्। अतः रसानां सारोऽस्ति प्रेम। रसस्तु शृङ्गार एव एको, ततो एवैकोनपञ्चाशत् भावा उत्पद्यन्ते। भावेभ्यो रसा उत्पद्यन्ते इति न अपितु रसेभ्यो भावाः जायन्ते, रसस्तु शृङ्गार एव। अस्मादेवाहङ्कारान्मानवेषु स्वव्यक्तित्वस्यावबोधो भवति, स्वात्मनः सत्ता चानुभूयते। तथ्यस्यास्य प्रतिपादनाय एकं सुन्दरमुदाहरणमुपस्थापयति भोजराजः-

---

5. तत्रैव-3, पृ0-78
6. सरस्वतीकण्ठाभरणम्-5/1
7. शृङ्गारप्रकाशः-11/पृ0-624
8. लोचनटीकायाम्- येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयीभवनयोग्यता ते स्वहृदयसंवादभाजाः सहृदयाः।
9. शृङ्गारप्रकाशः-11/7, पृ0-614

**अहो अहो नमो मह्यं यदहं वीक्षितोऽनया।**
**मुग्धया त्रस्तसारङ्गतरलायतनेत्रया।।**[10]

यथा कयाचित् कन्यया स्निग्धदृष्टयावलोक्यमाने पुरुषे यदात्मज्ञानस्य, आत्मविश्वासस्य, आत्मानुरागस्य च भावो जायते, सा भावना तं सहजानन्दे निमज्जयति, तत्र अहङ्कार एव हेतुः। इयमेवाहङ्कारस्य स्थितिः। अनया स्थित्या तस्य मनोमयूरो नृत्यति। आत्मज्ञानमात्मप्रतीतिर्वा सहजानन्दरूपो रसः। अभिमतः मनोऽनुकूलत्वात्सोऽभिमान इत्युच्यते। अत्राभिमानो मिथ्यागर्वरूपो नास्ति, स त्वात्मस्थितो संस्कारगुणविशेषः। यो हि रस्यमानत्वाद्रस उच्यते। आत्मनोऽहङ्कारगुणविशेष आत्मविश्वासरूपः, उत्साहरूपश्च। सत्यमपि अनेनोत्साहेन विना, आत्मविश्वासेन विना मानवेषु नैराश्यमावसादो वाऽऽगच्छति। नैराश्यभावेन (Depression,Depressed) किमपि वस्तु सुन्दरमसुन्दरं वा न रोचते मानवेभ्यः। अतः का कथा रसानुभूतेः? एतदर्थमहङ्कारतत्त्वमावश्यकमस्ति जीवने। तदेवाङ्ग्लभाषया 'म्हव' इति शब्देन कथ्यते। प्रसङ्गेऽस्मिन् डॉ0 वी0 राघवन्महोदयस्य विचारा अवलोकनीयाः- "And here I quote Dr V.Raghavan- "By ahankara is meant ego; not egotism. Sense of "Ego" or 'I' in man which is the mark of the development of character, of the perfection of man's nature and of the level of the culture. This ego- consciousness is the first germ from which is every other emotion born.It is the atman's love for itself. This love of self exhibits itself as love for outward objects''.[11] The बृहदारण्यकोपनिषद् declares- "आत्मनस्तु कामाय सर्वं प्रियं भवति।" That means-' if I am not for me, who will be for me?' it is the same idea expressed inthe other way- 'I love everything because I love myself.'

Bhoja's ahankara is called also 'अभिमानः' because it imparts its quality of pleasure to all experiences, including pain. It is also called 'शृङ्गारः' because it is itself the peak (शृङ्ग) and takes man to the peak of perfection. येन शृङ्गं रीयते स शृङ्गारः। This ahankara is the one and only true rasa enabling us to enjoy anything in this world. It is not due to any visible cause but is the result of a number of good deeds in our past birth as a result of which it is begotten in our souls.

साहित्यदर्पणकारेणापि- **'कैश्चिदिति प्राक्तनपुण्यशालिभिः। यदुक्तम्- पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससंततिम्।'**[12] तत्रैव साहित्यदर्पणकारः कथयति-

'न जायते तदास्वादो विना रत्यादिवासनाम्।'

**वासना चेदानींतनी प्राक्तनी च रसास्वादहेतुः।**

---

10. तत्रैव-11/38, पृ0-625
11. Bhoja's Sringaraprakasa-Dr.V. Raghavan-p, 452.
12. साहित्यदर्पणम्-3/पृ0-79

तत्र यद्याद्या न स्यात्तदा श्रोत्रियजरन्मीमांसकादीनामपि स्यात्। यदि द्वितीया न स्यात्तदा यद्रागिणामपि केषांचिद्रसोद्बोधो न दृश्यते तन्न स्यात्। अतएवोक्तं धर्मदत्तेन-

सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसंनिभाः।।[13]

अनेन प्रतीयते यत् या वासना विश्वनाथाचार्येण रसास्वादनप्रसङ्गे निरूपिता, साऽपि अहङ्कारमूला एव।

The process can be examined and analyzed from the outward object. यथा-'

अहो अहो नमो मह्यं----। अपि च

करुणादावपि रसे जायते यत्परं सुखम्।
सचेतसामनुभवः प्रमाणं तत्र केवलम्।।

नहि कश्चित्सचेतन आत्मनो दुःखाय प्रवर्तते। करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात् सुखमयत्वमेव।'' [14]

we find the same idea if we analyze the ordinary expressions of men when they attain some prize ,some recognition , some respect etc.- ' I should congratulate myself, I am proud of it'and so on. The Upanisada says & आत्मनस्तु कामाय सर्वं प्रियं भवति' सोऽयमात्मा श्रेष्ठश्च प्रेष्ठश्च।"[15]

The श्रीमद्भागवतपुराण also says . 'सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः। इतरेऽपत्यवित्ताद्याः तद्वल्लभतयैव हि।।"[16]

अतः All bhavas which are enjoyed by men only by this power of Ahankara. वस्तुतः आत्मविश्वासेन विना मानवाः स्वजीवने साफल्यं न प्राप्नुवन्ति, आनन्दञ्च नानुभवन्ति, तत्राभिमानस्याभाव एव कारणम्। यतो हि शृङ्गारी एव रमते, स्मयते, हसति, शोचति, विस्मयते, उत्सहते, स्निह्यति, बिभेति, जुगुप्सते, क्रुध्यते, चिन्त्यते, शाम्यति, गर्वायते इति। अतएव भोजराजेन शृङ्गार एवैको रसः स्वीक्रियते-

---

13. तत्रैव-3/8, पृ0-84, वृत्तितः
14. तत्रैव-3/4, वृत्तितः पृ0-82।
15. वृ.उपनिषद्-
16. भागवतपुराणम् -10, शृङ्गारप्रकाशः-पृ0-452

**शृङ्गारवीरकरुणाद्भुतरौद्रहासबीभत्सवत्सलभयानकशान्तनाम्नः ।**
**आम्नासिषुर्दश रसान् सुधियो वयं तु शृङ्गारमेव रसनाद् रसमामनामः।।[17]**

सर्वे रत्यादयः भावाः शृङ्गारादेवोत्पद्यन्ते, यथा- **'तत्र केचिदाचक्षते रतिप्रभवः शृङ्गारः इति। वयं तु मन्यामहे रत्यादीनामयमेव प्रभव इति। ते तु भाव्यमानत्वाद् भावा एव न रसाः।'[18]**

अष्टौ स्थायिभावाः, अष्टौ सात्त्विकास्त्रयस्त्रिंशद् व्यभिचारिणः इति न स्वीक्रियन्ते भोजराजेन, सर्वे मनःप्रभवत्वात् भावा एव इति। **''यतोऽमीषामन्यतमस्यैतैरेव परस्परं निर्वर्त्यमानत्वात्वात्। कश्चित् कदाचित्स्थायी, कदाचित्तु व्यभिचारी। अतोऽवस्थावशात् सर्वेऽप्यमी व्यभिचारिणः, सर्वेऽपि च स्थायिनः, सात्त्विका अपि सर्व एव मनःप्रभवत्वात्।''[19]**

विभावानुभावव्यभिचारिसंयोगात् स्थायिनो रसत्वमिति तदपि नाङ्गीक्रियते तेन, यथा च- **''हर्षादिष्वपि विभावानुभावव्यभिचारिसंयोगस्य विद्यमानत्वात्। तस्माद् रत्यादयः सर्व एवैते भावाः, शृङ्गार एवैको रसः इति। तैश्च सविभावानुभावैः प्रकाशमानः शृङ्गारो स्वदते। तं चात्मनोऽहङ्कारगुणविशेषं ब्रूमः। स शृङ्गारः, सोऽभिमानः, स रसः।''[20]**

तदुपाधिश्चायमुपजायमानो रसः त्रिधा विख्यायते- प्रकृष्टो, भावरूपः, आभासश्च। वाक्येषु गुणालङ्कारसन्निवेशविशेषजन्यत्वान्नानालङ्कारसंसृष्टावेव प्रकृष्टत्वं लभते। अहङ्कारोऽभिमानशृङ्गारो रसस्य पुर्वा कोटिमुपवर्णयति भोजराजः- 'तत्र ऊर्जस्वि रूढाहङ्कारमित्यनेनात्मविशेषनिष्ठस्योत्कृष्टादृष्टजन्मनोऽनेक-जन्मानुभवसंस्काराऽऽसादि-तद्रढिम्नः समग्रात्मगुणसम्पदुदयातिशयहेतोरहङ्कारविशेषस्योपसंग्रहादहङ्कारा-भिमानशृङ्गाराद्यपरनाम्नो रसस्य मानमयविकाररूपेणाभिमानिनां मनसि जाग्रतः पूर्वां कोटिमुपवर्णयति। यदाह-

**सत्त्वात्मनाममलधर्मविशेषजन्मा जन्मान्तरानुभवनिर्मितवासनोत्थः।**
**सर्वात्मसम्पदुदयातिशयैकहेतुर्जागर्ति कोऽपि मानमयो विकारः।।[21]**

रसवद्रसपेशलमित्यनेन शृङ्गारस्य मध्यमामवस्थामवस्थापयति। प्रेयः प्रियतराख्यानमित्यनेन परप्रकर्षाधिगमे रसरूपेण परिणतिरिति ज्ञापयन्नहङ्कारस्योत्तरां कोटिमुपलक्षयति। यदाह दण्डी-

**प्रेयः प्रियतराख्यानं रसवद् रसपेशलम्।**
**ऊर्जस्विरूढाहङ्कारं युक्तोत्कर्ष च तत्त्रयम्।।[22]**

---

17. शृङ्गारप्रकाशः- प्रथमोऽध्यायः, पृ0-6 ।
18. तत्रैव- 11/ पृ0-615
19. तत्रैव-11/पृ0-615
20. तत्रैव- 11, पृ0-615,616
21. तत्रैव-11/37,पृ0-624
22. काव्यादर्शः- 2/275

उपर्युक्तविवेचनेन प्रतीयते यत् भोजराजाग्निपुराणकारयोर्निरूपितरसतत्त्वस्य विवेचने साम्यं दृश्यते। तत्र भोजराजेन रसतत्त्वस्य व्यावहारिकं, विशिष्टं, विशदञ्च व्याख्यानं कृतम्। मनोवैज्ञानिकदृष्ट्याऽपि भोजराजकृतं विवेचनं समुचितं प्रतीयते।

शारदातनयेन रसविषये पञ्चसिद्धान्ताः प्रस्तुताः, तत्र तृतीयपञ्चमौ सिद्धान्तौ योगमालासंहितायां कथितौ स्तः। यथा-

**अहङ्कारस्त्रिधा सोऽयं सत्त्वादिगुणभेदतः।**
**सत्त्वादिगुणभेदेन योऽहङ्कारस्तु सात्त्विकः।**
**अहङ्कारस्य वृत्तिर्या सोऽभिमानः प्रकीर्तितः।**

**साऽभिमानात्मिका वृत्तिस्तत्तदिन्द्रियगोचरा।**
**बाह्यार्थालम्बनवती शृङ्गारादिरसात्मताम्।।**

**ईदृशी च रसोत्पत्तिःमनोवृत्तिश्च शाश्वती।**
**कथिता योगमालायां संहितायां विवस्वते।।**[23]

तृतीयसिद्धान्तानुसारेण बाह्यवस्तु संसर्गदशायामभिमान उत्पद्यते। वृत्तिभिरिन्द्रियैश्च सात्त्विक-राजस-तामसगुणानां प्रभावेनाभिमानोपलक्षिता रतिरेव विविधरूपैरभिव्यज्यते। एतद्रीत्या नायकनायिकादीनां मनोवृत्यनुरूपेणाभिमानो यदा विविधगुणैः संयुक्तस्तदैव रसनिष्पत्तिर्भवति। भावप्रकाशने वर्णितेन पञ्चसिद्धान्तानुसारेण रसस्तु मनसः प्राकृतावस्थाविचलनेनापोद्धृत्यते। मनसो नाट्ये प्रयुक्तानां विविधसामग्रीणां संसर्गात्तस्मिन् अहंकार उत्पद्यते। तस्मिश्चाहंकारे नैसर्गिकरूपेण विद्यमानाः सत्त्वरजस्तमोगुणाः, रसरूपेण परिणताः भवन्ति। यथा-

**उत्पत्तिस्तु रसानां या पुरा वासुकिनोदिता।**
**नारदस्योच्यते सैषा प्रकारान्तरकल्पिता।।**

**बाह्यार्थालम्बनवतो मनसो रजसि स्थितात्।**
**साहंकाराद्विकारो यः स शृङ्गार इतीरितः।।** इत्यादयः।[24]

अनुभावविवेचनप्रसङ्गे अग्निपुराण-भावप्रकाशन-रसार्णवसुधाकरग्रन्थेषु साम्यं दृश्यते। अग्निपुराणे अनुभावस्य चतुर्विधश्रेणयः दृश्यन्ते। यथा च-

---

23 भावप्रकाशनम्-2/62,63,64,65
24 भावप्रकाशनम्- 2/67,68

**मनोवाग्बुद्धिवपुषां स्मृतीच्छाद्वेषयत्नतः।'**[25] अर्थात् मन–वागारम्भानुभावः, वागारम्भानुभावः, बुद्ध्यानुरम्भानुभावः, शरीरारम्भानुभावाश्च। भावप्रकाशनेऽपि–

**उत्पन्ना रतिरेकत्र प्रथमं दर्शनादिभिः।**
**त्रिधाऽनुभावानुबन्धा रसोत्कर्ष यथा रतिः।।**[26]

एवं त्रिविधानुभावः शारदातनयेनापि प्रतिपादितः। रसार्णवसुधाकरस्य प्रथमे विलासे चतुर्धानुभावः प्रतिपादितः। यथा– **'भावं मनोगतं साक्षात् स्वहेतुं व्यञ्जयन्ति ये।**

**तेऽनुभावा इति ख्याता भ्रूविक्षेपस्मितादयः।**
**ते चतुर्धा चित्तगात्रवाग्बुद्ध्यारम्भसम्भवाः।।**[27]

भोजराजाग्निपुराणकारशारदातनयमतेषु साम्येन सह वैषम्यमपि दृश्यते। पुराणमते सर्वे रसाः रतिमूलाः, रतेर्मूलमस्त्यहंकारो यः, मनोविकारादभिमानादुत्पद्यते। परन्तु भोजशारदातनययोर्मते अहंकार एव रसमूलम्। पुराणेऽहंकारस्यैव विकारश्चमत्काररूपो रसः। भोजस्तु तमात्मनोगुणविशेषं स्वीकरोति। शारदातनयमतेऽहंकारो नायकनायिकयोर्गुणवत्त्वरूप एवास्ति।

इत्थं संस्कृतसाहित्यशास्त्रीयपरम्परायां भोजराजाग्निपुराणकारशारदातनयप्रतिपादितानां साहित्यशास्त्रीयविषयाणां महत्वपूर्ण स्थानमस्ति। शास्त्रस्यास्य विकासयात्रायामेतेषामाचार्याणां चिन्तनस्य महत् योगदानमस्ति। भोजराजनिरूपितं रसतत्त्वं सर्वथा मौलिकं नवीनं मनोवैज्ञानिकञ्च प्रतिभाति। रसतत्त्वस्य यादृशं निरूपणं समुपलभ्यते शृङ्गारप्रकाशस्यैकादशप्रकाशे तेन शृङ्गाराभिमानाहंकारपर्यायरूपस्य रसतत्त्वस्य व्यावहारिको वैज्ञानिकश्च पक्ष उद्घाटितोऽस्ति। वस्तुतो मानवजीवनेऽभिमानतत्त्वस्य महत्त्वं सर्वथा सुतरां च स्वीक्रियते मनोवैज्ञानिकैरपि। अतएव भोजराजकृता रसतत्त्वस्य व्याख्या ग्राह्या, अनुकरणीया च विद्यते। अपरतः अग्निपुराणस्य रसतत्त्वप्रतिपादनमपि सर्वथा मौलिकमेव। अग्निपुराणकारमते रसाभिव्यक्तौ भावादीनामपेक्षा भवति। भोजराजाग्निपुराणकारयोर्मध्ये रसतत्त्वनिरूपणसन्दर्भे कुत्रचित् साम्यं, बहुशः पार्थक्यञ्च परिलक्ष्यते। द्वयोः प्रतिपादनपद्धतिरपि भिन्नाऽस्ति। द्वयोर्मध्ये कः पूर्ववर्ती कश्च परवर्तीति गवेषणायाः विषयः। तत्र विदुषां वचनमेव प्रमाणम्। इति

---

25 अग्निपुराणोक्तं काव्यालंकारशास्त्रम्–4/60,61

26 भावप्रकाशनम्–1/11,12,13,14,15,16,–6/2, पृ0–186

27 रसार्णवसुधाकरः– 1/190,191

# अनभिहिताधिकारः

डॉ. रामनारायणद्विवेदी

अभ्यधायि, इत्यभिहितम् न अभिहितम् अनभिहितम् (अनभिहिते)[१] अनुक्तमित्यर्थः। अधिकार-सूत्रम्। कर्मणि द्वितीयेत्यादौ[२] अधिक्रियमाणं सामानाधिकरण्येनान्वेति। यथा अनभिहिते कर्मणि, अनभिहिते करणे इति। यस्मिन् अर्थे प्रत्ययः स उक्तः अभिहेतो वा उच्यते। एवं सति भीष्मं कटं कुरु, इत्यत्र कटपदोत्तरद्वितीयया कर्मत्वोक्तौ भीष्मपदाद् द्वितीया न स्यादतः, अभिधानप्रयोजकनिमित्तानि आह कौमुद्याम्[३] -अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैरिति। एवं सति तिङादिभिरुक्तत्वे एव न विभक्तिः। प्रकृते द्वितीयया उक्तत्वेऽपि तिङादिभिरनुक्तत्वात् द्वितीया प्रवर्तते। हरिं भजति इत्यादौ तिप्रत्ययस्य कर्तरि विधानात् कर्मणोनुक्तत्वात् हरिमित्यत्र द्वितीया। अध्याहृत देवदत्तादेरुक्तत्वेन देवदत्तः इत्यत्र प्रथमा। अभिहितः सोऽर्थोन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः प्रातिपदिकार्थमात्रे प्रथमेति स्वीकारात्। हरिं भजतीत्यत्र भजनक्रियया हरौ प्रीतेरुत्पादात् क्रिया व्याप्यत्वे न हरिः कर्म। व्याप्तिश्चात्र सम्बन्धः। ननु क्रिया कर्तृनिष्ठो व्यापारः तत्सम्बन्धित्वं कर्तुर्नतु कर्मणः, इति चेत् क्रिया जन्यफलाश्रयः कर्म इति तदर्थस्तथा च न दोषः। अभिधानोदाहरणानि हरिः सेव्य इत्यादीनि कर्तुरनुक्तत्वेन ततस्तृतीया, अत्र प्रत्ययस्य कर्मणि विधानात्। कर्ता देवदत्तः अनुक्तः ततश्च कर्तृकरणयोस्तृतीयेति[४] सूत्रेण तृतीया देवदत्तेनेत्यत्र हरिनिष्ठ प्रीत्यनुकूलदेवदत्तनिष्ठोवर्तमानो व्यापारः इति हरिं भजतीत्यस्य शाब्दबोधः, हरिः सेव्यते इत्यत्रापि एवमेव। व्यापारमुख्यविशेष्यक एव बोधः। भावप्रधानमाख्यातमिति[५] निरुक्तात्। धातूपस्थाप्या क्रिया तिङर्थम्प्रति विशेष्या न तु कृतीवविशेषणमिति तदर्थः। अतएव पाचको ब्रजतीतिवत् पचति व्रजतीति नैकं वाक्यम्। पाककर्तृकर्तृकं व्रजनमिति पाचको व्रजतीत्यस्यार्थः। एक कर्तृका पचिक्रिया एककर्तृका व्रजि क्रियेति पचतिव्रजत्योः पृथगेव बोधः।

एवञ्च प्रथमान्तार्थ मुख्यविशेष्यकबोधवादिमतम् न समीचीनम्, भाष्यादिविरोधात्। प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे, पश्य मृगो धावतीत्यत्र प्रथमान्त द्वयम्, मृग इति, अध्याहृतत्वमिति, तथा त्वद्रीत्या धावनाश्रयो मृगः दर्शनाश्रयात्वमिति बोधद्वयं स्यादिति तदेकवाक्यता हानिः स्पष्टा। व्यापार मुख्यविशेष्यकत्वे तु मृगकर्तृकोत्कटधावनकर्मकं प्रेरणाविषयीभूतम् त्वत्कर्तृकं दर्शनमित्येकवाक्यता

१. पा. सू. २/३/१
२. पा. सू. २/३/२
३. कर्मणि द्वितीया सूत्रे (कारक प्रकरणे) प्रौढमनोरमायाम्
४. पा. सू. २/३/१८
५. नि. १अ. १ख.

जायते। मनोरमायां कारकप्रकरणे हरिं भजतीत्यत्र व्यापारविशेष्यकबोधमुक्त्वा हरिः सेव्यते इत्यत्राप्येवमेवेत्युक्तम्, तत्प्रतीकमादाय रत्नकारेणोक्तम् "धात्वर्थ एव विशेष्य इतिम्। धात्वर्थः फलं व्यापारो वेति इति तदर्थः। तत्प्रतिपादयन्नाह-इयांस्तु[६] विशेषः, तत्र फलांशो विशेष्य; कर्तरि तु व्यापारः। अतएव 'सुप् आत्मन्[७] इति सूत्रे भाष्ये, इष्यते पुत्र इत्यत्र पुत्रीयतीति प्रयोगो न; भिन्नार्थत्वात्। यदाहि क्रियाफलस्य प्राधान्यं प्रतिपिपादयिषितं तदा वाक्यमेव व्यापारप्राधान्ये तु क्यजिति कैयटश्च। अनेन मतभेदः प्रतीयते। समानविशेष्यबोधजनकत्वं समानार्थकत्वं तत्र नास्ति तथा विग्रहे न क्यजिति, किन्तु वाक्यमेव, किन्तु पुत्रमिच्छतीति विग्रहे एव क्यजिति।

प्रसङ्गतः किञ्चिदुक्त्वा तिङादिभिरभिधाने सम्भावितदोषमालिख्य समाधानायोपक्रमते। नन्वेवं पक्वमोदनं भुङ्क्ते इत्यत्र पच् धातुप्रकृतिककृत्क्तप्रत्ययेनौदन कर्मण उक्तत्वात् ओदनशब्दात् द्वितीयोपपत्तिरित्यत्रोच्यते-यत्र पच्-भुजि-निरुपिते द्वे शक्ती, तत्र प्रधानक्रिया भुजि क्रिया, पाकजन्यफलाश्रयौदनकर्मकवर्तमानकालिकैककर्तृकः गलबिलाधः- संयोगानुकूलो व्यापारः इति बोधे तस्या एव प्राधान्यात्। भुङ्क्ते इत्यत्र कर्तरि तिङः सत्त्वेन कर्तुरुक्तत्वेऽपि ओदन कर्मणः अनुक्तवात् तदादाय कर्मणि द्वितीयोत्पत्तौ बाधकाभावः। पच् धातूत्तर क्त प्रत्ययेन कर्मोक्तयपि पच् धातूपस्थाप्या क्रिया गुणीभूतेति सर्वे सेवका राजनमुपगच्छन्तीतिन्यायेन प्रधानीभूतक्रिया निरूपित कर्मत्व शक्तिरनुक्तेति अप्रधानक्रियानिरुपितशक्तिरपि अनुक्तत्वेन भासते तदुक्तम्-

**[८]प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।**
**शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥**
**प्रधानविषया शक्तिः, प्रत्ययेनाभिधीयते।**
**यदा गुणे तदा तद्वदनुक्तापि प्रतीयते॥**

अयमाशयः- पक्त्वा ओदनो भुज्यते ओदनो भोक्तुं पच्यते, इत्यादावेकस्य द्रव्यस्य क्रियाद्वयनिरुपितकर्मत्वशक्तिद्वययोगे यथायथं शब्दमार्थञ्च क्रियागतं प्राधान्यमाश्रित्य प्रधाने कर्मणि लादिर्भवतीति सिद्धान्तः। क्रियाद्वयविषयापि कर्मत्वशक्तौ एकस्या लादिनोक्तत्वेऽपर शक्त्यभिधानाय द्वितीया कथन्नोत्पद्यते, इत्याशङ्कायामाह-प्रधानेतरयोरिति। अस्यार्थः- यत्र यस्मिन् वाक्ये प्रधानेतरयोः प्रधानाप्रधानयोः क्रिययोः सम्बन्धिनी द्रव्यस्य पृथक् शक्तिरिति तत्र गुणाश्रया शक्तिरप्रधानक्रिया निरुपिता शक्तिः ; कर्मत्वादि शक्तिः प्रधानमनुरुध्यते प्रधानशक्तिमनुरुध्येत्। तेन प्रधानक्रियानिरुपित शक्तेरभिधानानभिधानाभ्यां गुणशक्तेरभिधानानभिधाने भवत इति भावः।

अत्रेदमवधेयम्- धात्वर्थानामेकवाक्योपात्तानां परस्परं सम्बन्धो भवति। तत्र द्वयोः प्रधानयोः समत्वात् मिथोऽङ्गाङ्गिभावः सम्बन्धो न भवति नापि द्वयोर्गुणयोरर्थयोः परस्परं सम्बन्धो [९]गुणानाञ्च

६. प्रौढमनोरमायां शब्दरत्ने कारकप्रकरणे कर्मणि द्वितीया सूत्रे
७. पा० सू० ३/१/८१ महाभाष्येऽपि इष्यते पुत्र इत्यर्थे पुत्रीयतीति न प्रयोगो भिन्नार्थत्वात्।
८. वा० प० ३ साधनसमुद्देश्य का० सं० ८१-८२
९. जैमिनि सू० द-३-१-२२

परार्थत्वादसम्बन्धः समत्वादिति न्यायात्, यत्र गुणप्रधानभावस्तयोः समन्वयोपपत्त्या एकवाक्यता भवति। लोके प्रधानानुरोधित्वंप्रधानानां दृश्यते। तत्र गुणानां प्रधानानुरोधित्वेप्यवस्थिते, प्रधानक्रिया विषयीभूत-कर्मत्वशक्तेरभिधाने गुणीभूत क्रियानिरुपित कर्मत्वादि शक्तिरपि अभिहितवत् प्रकाशते। इति पूर्वकारिकायां सामान्येन उक्तम्- गुणस्य प्रधानानुरोधः विशेषत उच्यते - प्रधानविषयेत्यादिनाप्रत्ययेनाभिधीयते तदा गुणे गुणक्रिया निरुपिता कर्मत्वशक्तिरनुक्तापि तद्वत् अभिहितवत् प्रकाशते। प्रधानवाचिनो धातोरुत्पतेर्लादिना प्रत्ययेन यदा प्रधानक्रिया निरुपिता कर्मशक्तिरभिधीयते तदा गुणक्रियानिरुपितापि साक्षादनभिहितापि कर्मशक्तिरभिहितवत् प्रकाशते, इदमेव गुणानां प्रधानानुरोधित्वम् - अत्र दृष्टान्तरूपेणाह-

**पचावमुक्तं यत्कर्म क्त्वान्ते भावाभिधायिनि।**
**भुजौ शक्त्यन्तरेऽयुक्ते तद्वद्धर्मः प्रकाशते।।** इति।

अयमर्थः- भावाभिधायिनि धात्वर्थमात्रवाचके न तु कृत्त्वात्कर्तृवाचिनि क्त्वान्ते पचौ तद् वाच्य पाकक्रियानिरूपितं यत्कर्म प्रत्ययेन भावभिधायित्वादेवानुक्तं भुजौ भुजिक्रियानिरुपिते ओदननिष्ठे कर्मत्वरूपे शक्त्यन्तरेत्यादिना प्रत्ययेनोक्ते सगुणक्रियानिरुपितकर्मशक्तिरूपो धर्मः प्रत्ययेनामुक्तोपि तद्वत् अभिहितवत् प्रकाशते। [११]मनोरमाकारः- अतएव पक्त्वोदनो भुज्यत् इत्यत्र भुजि प्रत्ययेनाभिहिते कर्मणि प्रथमैव, पचेरप्रधानत्वात्। गुणक्रियानिरुपिता उक्तापि प्रधाननिरुपितानुक्तशक्तिवत्प्रकाशते। अतएव प्रासादे अस्ति इत्यादौ सदिनिरुपिताधिकरणत्वस्योक्तत्वेऽपि आसिनिरुपितस्यानभिधानेनाभिहितत्वात् सप्तमी सिद्धयति। एवमुभय निरुपितशक्तेरभिधाने गुणक्रियानिरुपितशक्तेरप्यभिधायिनी विभक्तिर्भवत्येव। यथा ग्रामाय गन्तुमिच्छति ग्रामे गन्तुमिच्छतीति इष्यते ग्रामो गन्तुमित्यादौ प्रधाने इति क्रिया निरुपित शक्तेरभिधाने गुणक्रिया निरुपिताया अप्यभिधानान्न भवतः कदापि चतुर्थीद्वितीये।

अत्र मनोरमाकारः- वस्तुतस्तु पक्त्वा भुज्यते इत्यत्र कर्मणः पचिभुजिभ्यां न युगपच्छादोऽन्वयः किन्तु अन्यतरेण शाब्दः अपरेणार्थः, अत्र प्रथमेद्वितीये व्यवस्थिते। तद् यथा-पक्त्वा भुज्यते ओदनः पक्त्वा अर्थादोदनम्। यदातु ओदनं पक्त्वा भुज्यते इति प्रयुज्यते, अर्थादोदन इति कथ्यते, एवञ्च विवक्षाभेदेन पूजयितुं शक्यते, हरिंहरिरित्युभयं साधु। अत्र शब्दरत्नकारः-उभयत्रापि शाब्दोन्वयः गमेर्ग्रामः कर्म इषेस्तूभेकर्मणी, इति। धातोः कर्मण इति सन् सूत्रे भाष्यात् इति मन्यते तन्मतपोषणाय, अत्र प्रयोगे गमिक्रियापेक्षे द्वितीयाचतुर्थ्यौ न कदापि भवत इति तत्सूत्रस्थं कैयटमप्याह। मनोरमोक्तं तुच्छयति। अतएव [१२]स्वादुमिणमुल् इति सूत्र शेषे भाष्ये इत्यादिना।

भाष्यञ्च तुमुन्क्त्वाणमुलादयः स्वान्वयिना समभिव्याहितेनानुप्रयुज्यमानेन समानाधिकरणे तद् वाच्यकारके वक्तव्याः इति। आच तुमुनः समानाधिकरणे प्रत्ययाः इति वार्तिकन्तस्य व्याख्यानपरं भाष्यम्। तदुदाहरणम् भोक्तुमोदनः पच्यते इति। वार्तिके समानाधिकरणपदं तस्य प्रतियोग्याकाङ्क्षा

१०. साधन समुद्देश्य वा॰ प॰ का॰ सं॰ 3।83 (तुमर्थेसेसेनसेअसेन पा॰ सू॰ 3।4।8 इति सूत्रात्तुमर्थ ग्रहणानुवृत्या भाष्यकारमतेन भावे विधानमिति संचिन्त्य प्रकृत् कारिकायां भावाविधायिनि इत्युक्तम्।)

११. प्रौढमनोरमायां कारकप्रकरणे अनभिहिताधिकारविचार प्रसङ्गे।

१२. पा॰ सू॰ ३।४।२६

शान्त्यर्थमुक्तम्। स्वान्वयिनेति, तुमुनादिप्रकृत्यर्थान्वयिनेत्यर्थः। एतस्यैव विवरणम् समभिव्याहृतेनेत्यत् आरभ्य अनुप्रयुज्यमानेनेत्यन्तम्। आख्यातकारकाभिन्नं यत् क्त्वादिप्रकृत्यर्थकारकं तस्मिन्नित्यर्थः। कारकभेदे तु गुणीभूत क्रियाकर्मत्वबोधिका द्वितीयाभवत्येव पक्त्वौदनं ग्रामो गम्यते, अत्र पचिक्रिया कारकः ओदनः ; गमिक्रिया कारको ग्राम इति कारक भेदः, गमिक्रियाकारकस्य तिङाभिधाने ग्रामपदात् प्रथमा, पचिक्रिया कारकस्य ओदनस्यामुक्तत्वेन द्वितीया क्त्वा प्रत्ययस्यभावे विधानात्। तेन पक्त्वौदनो भुज्यते इत्यादौ ओदने द्वितीया न, अन्यथा कृत्त्वात्कर्तर्यापत्तौ पचिक्रिया कर्मत्वस्यानभिधानात् स्यादेव, इत्युक्त्वा, न वक्तव्यमव्यय कृतां भावे विधानात् इत्युक्तम् अनेन भाष्येण उभयत्र शाकान्वय एव लभ्यते। तत्र वचनारम्भे एवं प्रयोगाणामुपपत्त्यभावात् प्रत्याख्यानेऽपि हर्युक्त रीत्या सनसूत्रस्थ भाष्यसम्मततयाभाव एवोचितः। एवं च कैयटोक्तं प्रतिहन्तुं शक्यमित्यसाधु वचनारम्भेऽसिद्धेः। तुमुनाद्यन्वपि क्रियानिरुपित शक्तेरयं स्वभावः यत्समानाधिकरणगुणभूततुमुनादिप्रकृत्यर्थ निरुपितशक्तेः स्ववदभिहितत्वेना-नभिहितत्वेनैव प्रकाशते।

**अभिधानप्रयोजकानि-**

तिङाभिधानम् हरिः सेव्यत इति। अत्र चैत्रेणेति कर्तृवाचकं पदमध्याहार्यम्। अत्र धातुप्रकृतिकाख्यातेन कर्मण उक्तत्वात् हरिशब्दात् प्रथमैव। चैत्रादिकर्तृकसेवनजन्यफलाश्रययो हरिरिति बोधः। इदमपि अनभिहिताधिकारस्य न फलम्, अनवकाशत्वात् प्रथमा बाधिका भविष्यति।

तद्धितोदाहरणम्, शत्य इति शतेन क्रीतः शत्यः। शतकरणक क्रयणकर्मीभूतोऽश्वः। अत्र अश्वस्य धात्वर्थ फलाश्रयेत्वेऽपि तद्धितेन यत्प्रयत्ययेन अश्वादिरूप कर्मण उक्तत्वेन नाश्वादि पदाद् द्वितीया। वस्तुतस्तु नेदं फलमनभिहिताधिकारस्य तथाहि यथा विभक्ति वाच्यतावच्छेदकोद्भूतशक्तिपुरस्कारेण कर्मादिपदानामुपस्थापकत्वं नास्ति, तथैव तद्धितादिरपि, अतः द्वितीयाप्राप्तिरेव नास्ति। अत औपगव इत्युदाहरणं युक्तम्[१३]। तत्र सम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्त षष्ठी वारणार्थमनभिहिताधिकारः। तत्र हि उपगु निरुपित जन्यजनकभावरूपः सम्बन्धः। तस्य तद्धितेनोक्तत्वात् न षष्ठी।

समासेनाभिधानम्-प्राप्तानन्दः[१४] इति प्राप्त आनन्दो यमिति विग्रहे बहुव्रीहि समासः, यत्कर्मकप्राप्तिकर्ता आनन्द इति विग्रहवाक्याद् बोधः समासतश्च आनन्दकर्तृकप्राप्ति कर्मेत्यकारकः। अत्र मतभेदः, तथाहि विग्रहतो यत्कर्मकप्राप्तिकर्ता[१५], आनन्दः इति विग्रहवाक्याद् बोधः समासतस्तु आनन्दकर्तृकप्राप्ति कर्मेति बोधः, तथा च विशेष्यविशेषण भावव्ययत्यासेनैकार्थीभावः कल्पनीयः स्यात् तथासति वृत्तिविग्रहयोः समानार्थत्वहानिश्च। अतः प्रकृते प्राप्ति कर्त्रानन्द कर्मेत्येव बोधः स्वीकार्यः। यद्यपि क्रिया निरुपितं कर्मत्वम्, न तु कारकनिरुपितं कर्मत्वमिति आनन्द कर्मेन्यनुचितम्,

---

१३. अत औपगवश्चित्रगुरिति युक्तं प्रत्युदाहृतम् लघुशब्देनुशेखरे कारकप्रकरणे।

१४. कर्तृकर्मणोकृतिः पा॰ सू॰ २।३।६५ इत्यत्र महाभाष्ये।

१५. कालाः परिमाणिना पा॰ सू॰ २।२।५ इत्यादि सूत्र भाष्योक्तस्य वृत्ति विग्रहोः समानार्थत्वस्य निर्वाहार्थम्।

तथापि विशेषणीभूतप्राप्तौ तस्य पर्यवसानम्, स्वर्गोध्वंसस्त इतिवत् शाब्दबोधस्तु विशिष्टे तदारोपेण बोध्यः। अत्रायं संग्रहः-

अभिधानप्रयोजकेषु प्रायेणेत्युक्तम्, तस्य विवरणम्, क्वचिन्निपातेनाभिधानामित्युक्तम्, तस्योदाहरणमाह[१६] विषवृक्षोऽपिसंवर्ध्य स्वयं छेत्तुमसाम्प्रतम् इति, अत्र वृक्षस्य संवर्धनक्रियानिरुपित कर्मत्वेपि अपिना निपातेन एतत्कर्मत्वस्याभिधानात् तत्र कर्मणि द्वितीया न, किन्तु प्रथमैव। वस्तुतस्तु युज्यते समानार्थकासाम्प्रतम् घटक साम्प्रतमिति निपातेनेत्यर्थः वस्तुतो नेदमनभिहिताधिकारस्य फलम्, तथाहि-अत्र छेत्तुमित्यस्य साधुत्वाय [१७]तुमुन्ण्वुल् क्रियार्थायां क्रियायामिति सूत्र प्रवृत्यर्थं इष्यते, इत्यध्याहारः कर्त्तव्यः। अन्यथा क्रियार्थकक्रियोपपदत्वाभावेन स दुर्लभः स्यात्। अध्याहारे इच्छार्थेषु तुमुन् सुलभः, तथा च विषवृक्षोपि संवर्ध्य छेत्तुमिष्यते यत् तत् असाम्प्रतम् अन्याय्यम्, तथा च प्रधानीभूतक्रियावाचकधातुप्रकृतिकतिङा कर्मत्वस्याभिधानात् प्रधानानुरोधेन सम्बर्द्धन क्रियानिरुपित-कर्मत्वमनुक्तमपि उक्तवत्प्रतिभातीति न तत्कर्मवाचकाद् द्वितीया किन्तु प्रथमैव। अतो नास्ति निषाताभिध ानस्येदम् फलम्। नन्वेयम्-चयस्त्विषामित्यवधारितं पुरा ततः शरीरीरिति विभाविताकृतिम् ततो विभक्तावयवं पुमानिति [१८]क्रमादमुं नारद इत्यबोध सः।

अत्र सामान्यविशेषज्ञानपूर्वक ·एकनारदविषयकः कृष्णाभिनाश्रयकोऽतीतो व्यापार इति बोधो जायते। अत्र अबोधीत्यत्र कर्तरि लुङ् तेन कर्तुरुक्तत्वात् कर्मणः नारदस्यानुक्तत्वात् द्वितीयापत्तिः स्यादत इतीति निपातेनाभिधानमादाय प्रथमा प्रतिपादनानुपपत्तिः। अत्रोच्यते बुध् धात्वर्थज्ञानानुकूल-व्यापारात्मकक्रियानिरूपितफलाश्रयत्वेन नारदमिति प्रयोगनिरासाय इतीति निपातेन तत्कर्मत्वस्याभिधानेन न द्वितीयेति प्राचीनाः। नवीनास्तु नारद इति श्रीकृष्णीयज्ञानानुकरणमिति प्रथमान्तस्याप्रातिपदिकत्वात् न द्वितीया। इति शब्दाद् उत्पन्ना द्वितीया तु अव्ययत्वात् लुप्यते इति वदन्ति। अपि च चय इत्यारभ्य नारद इत्यन्तो भागो ज्ञानाकारस्तथा च तेषां धात्वर्थे ज्ञाने अभेदेनान्वयः। एञ्च इति पदं ज्ञानाकार-प्रदर्शनपरमेव न कर्मत्व बोधकम्। एवमेव तिङादिभिः परिगणिताभिधानमपि निष्फलम्। तथाहि तिङाभिधानस्य उदाहरणं हरिः सेव्यते इति। अत्र अनभिहिताधिकाराभावेऽपि, न द्वितीयापत्तिः अनवकाशया प्रथमया बाधात्। तथा चोक्तम् भाष्ये अनभिहितवचनमनर्थकं प्रथमाविधानस्यानवकाशत्वात् प्रथमा भविष्यति विप्रतिषेधेन इति। द्वितीयाया अवकाशः कटं करोति। प्रथमाया अवकाशा वृक्षः प्लक्ष इति। कृत उदाहरणं लक्ष्म्या सेवितः। लक्षेर्मुट्-ई· प्रत्ययः, लक्ष्मीरिति। अत्र धातूत्तरक्तप्रत्ययेन कर्मण उक्तत्वात् प्रथमा, कर्तुरनुक्तत्वात् लक्ष्म्या इत्यत्र तृतीया। कर्मणि निष्ठाविधानम्। इदमपि अनभिहिताधिकारस्य न फलम्, अनवकाशत्वात्परत्वाच्च प्रथमा वाधिका भविष्यति।

तद्धितोदाहरणम्-शत्य इति शतेन क्रीत इत्यत्र [१९]शताच्चठन्यतौ, इति सूत्रेण क्रयण कर्मरूप क्रीतार्थे यत् प्रत्ययः शतकारणक क्रयणफलाश्रय अश्व इति बोधः। अत्र अश्वस्य धात्वर्थफलाश्रयत्वेन

१६. कुमार संभवे - इतः स दैव्यः प्राप्त श्रीर्नेत एवार्हति क्षयम्। विषवृक्षोऽपि संवर्ध्य स्वयं हेतुमसाम्प्रतम् २।५५।

१७. पा॰ सू॰ ३।३।१०

१८. शिशुपालवधम् १ सर्ग - ३

१९. पा॰ सू॰ ५।१।२१

कर्मत्वेपि तद्धितेनोक्तंत्वात् प्रथमैव। वस्तुतो नेदमपि अनभिहिताधिकारस्य फलम्-तथाहि यथा विभक्ति वाच्यतावच्छेदकीभूत शक्ति पुरस्कारेण कर्मादिपदानामुपस्थापकत्वं नास्ति एवमेव तद्धितादेरपि द्वितीयादि-वाच्यतावच्छेदकरूपेणोपस्थापकत्वं नास्तीति द्वितीयाप्राप्तेरभावः।

अतः औपगव इति प्रत्युदाहरणं युक्तम्। तत्र सम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्त-षष्ठीवारणाय अनभिहित इति। तत्र सम्बन्धस्य येन रूपेण षष्ठ्या भानं तेनैव रूपेण तद्धितान्तादिभिः समुदायशक्त्या, एतदधिकाराभावे घट इत्यादौ षष्ठ्यवाच्यत्वेन दृष्टानामेव प्रातिपदिकार्थपदेन ग्रहणं स्यात् तद्भिन्नस्यैव च षष्ठीविधायके शेषपदेन ग्रहणं स्यादित्यत्रत्यसम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्तां षष्ठीं वारयितुमनभिहिताधिकारः। वस्तुतस्तु भीष्मं कटं कुरु इत्यादौ भीष्म पदाद् द्वितीयोत्पत्तये परिगणनं कृतम्। तथा चात्र कटपदोत्तरद्वितीयया कर्मत्वोक्तौ, अनुक्तत्वाभावात् भीष्मपदाद् द्वितीयामुत्पत्तौ परिगणने सति द्वितीयया उक्तत्वेपि परिगणिते नोक्तत्वाभावात् द्वितीया जायते। तत्प्रत्याख्यानाय कृतेन प्रपासैन औपगव इत्यादावपि षष्ठी वारितैव। तथाहि भीष्मं कटं कुरु इत्यादौ द्वितीयया उक्तत्वेऽपि द्वितीया परिशेषात् भविष्यति, तदाह अशेषत्वात् न शेषलक्षणा षष्ठी अन्यानभिहित कर्मादीनामभावाच्च नान्या इत्याशङ्क्य न केवला प्रकृतिरिति समयः कृतः, न चान्योत्पद्यमाना एतमभिसम्बन्धमुत्सहते वक्तुमिति कृत्वा द्वितीयेत्युक्तं भाष्ये तेनौपगवादावपि षष्ठी वारितैवेति अस्यापि प्रत्युदाहरणत्वमनुचितम्। अयमभिप्रायः- न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः इति, 'अपदं न प्रयुञ्जीत' इति नियमानुरोधेन भीष्मं कटं कुरु इत्यत्र कटपदोत्तर द्वितीयया उक्तत्वेपि कर्मणः भीष्म पदाद्द्वितीया भवत्येवेत्युक्तम्। समासस्य प्रत्युदाहरणम् प्राप्तानन्दः इति, तदपि न प्रत्युदाहार्यम्, जातस्य मास इत्यत्र जातपदोत्तरं श्रूयमाणा षष्ठी विभक्ति, मासजात इत्यत्रापि श्रूयेतेति शङ्कानिरासाय भाष्यकृतोक्तम् अभिहितः सोऽर्थोन्तर्भूतः प्रातिपादिकार्थः सम्पन्न इति षष्ठी न भवति इति। [२०]अनेकमन्यपदार्थ इति सूत्रे भाष्येपि, चित्रगुरित्यत्र षष्ठ्यर्थस्य नियमेनभानात् षष्ठी प्राप्नोतीत्याशङ्क्य अभिहितः सोऽर्थोऽन्तर्भूत प्रातिपादिकार्थः सम्बन्धः इति प्रथमेत्युक्तम्, तत्रान्तर्भूत इत्यनेन चित्रग्वादौ सम्बन्धस्यैव प्रवृत्तिनिमित्तत्वेन प्रातिपदिकार्थपदेन ग्रहणयोग्यतेति बोद्धव्यम्, विषमपदविवृतिकारेणापि समर्थितमिदम्-सम्बन्धस्य प्रातिपदिकार्थत्वेनादोषादिति।

इदं समाधानं तद्धितेपि योज्यम् अत्र मनोरमाकारचिन्तनम्-ननु बहुपटुरित्यत्र बहुनो उक्तत्वेन यथा कल्पबादयो न भवन्ति, तथैव क्रियते कट इत्यादौ तिङ्भिः कर्मण उक्तत्वात् द्वितीया न भविष्यति, किञ्च कटं करोतीत्यादौ सावकाशा द्वितीया कृतः कटः इत्यादौ प्रथमया बाधिष्यते निरवकाशत्वात्। न च वृक्ष इत्यादिरवकाशस्तत्रापि प्रतीयमानामस्तिक्रियाम्प्रति कर्तृत्वेन तृतीयाप्रसङ्गात्। एवञ्चानभिहिताधिकारोप्यर्थश् चेन्मैवं संख्या विभक्त्यर्थ इति पक्षे सूत्रारम्भात् तथा चानभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्यर्थः। अनभिहिते, इति सूत्राभावे कर्मणि यदेकत्वं तत्र द्वितीयेकवचन-मितिवाक्यार्थः स्यात्। तथा सति कृतः कटः इत्यादौ क्तेन कर्मत्वोक्तावपि तदेकत्वसनुक्तत्वेन द्वितीया

२०. पा॰ सू॰ ५।१।२४

स्यात्। उक्तार्थे संख्याया एव प्राधान्यम्, उक्तार्थानामप्रयोग इति न्यायस्य प्रधानार्थविषयत्वेनाप्रवृत्तेः, न च परत्वात्प्रथमेति वाच्यम् ततोपि परत्वात् कृद्योगलक्षणषष्ठीप्रसङ्गात्। कारकं विभत्यर्थ इति पक्षे सूत्रं प्रत्याख्यातम्-तत्पक्षे कारकस्यैव प्राधान्यात्; उक्तार्थन्याय प्रवृत्याद्वितीयाया अप्रवृत्तेः, अयं भावः- पञ्चकः प्रातिपदिकार्थः। तथा च प्रातिपदिकेन संख्याकारकयोरभिधाने कर्मणि वर्तमानात् प्रातिपदिकात् द्वितीयेति रूपेण विभक्तीनां विधानेन तत्तदर्थस्य वाच्यतया स्वादिसूत्रेणैव विभक्तेः सिद्धतया तेषां नियमत्वम्। एकस्मिन् कर्मणि इति सूत्रार्थबोधे कर्माद्यर्थप्राधान्यं तदा अनभिहिताधिकारो व्यर्थ एवेतिभावः।

अत्रेदं बोध्यम्- अनभिहिताधिकारसत्वपक्षे तिङ्कृत्तद्धितसमासैरभिधाने तत्तच्छक्त्यावेशेन न मानसिति विभक्त्यनुत्पत्तिः, अत्रैव अनभिहिताधिकारः इति सूत्रं तात्पर्यग्राहकम्। इदञ्च 'सुप् आत्मनः' इति सूत्रे भाष्यादायाति तत्र इष्यते पुत्र, इष्टः पुत्र इत्यत्र क्यचमाशङ्क्य स्वशब्देनोक्तत्वान्नेति समाहितम्। इष्ट शब्दसमानाधिकरण्यात् पुत्रार्थे कर्मत्वावगतावपि सुबन्तं न कर्मवाचीति तत्र क्यजितिभावः।

# सम्प्रदानत्वविमर्शः

श्रीप्रवीणकुमारचौधरी

सम्प्रदानस्य स्वरूपं प्रतिपादयता महर्षिपाणिनिना सूत्रितम् ''कर्मणा यमभिप्रैति स सम्प्रदानम्''[1] इति। अस्य वृत्तौ दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यादिति[2] प्रतिपादितं भट्टोजिदीक्षितेन। अर्थात् दानक्रियाकर्मणा कर्त्ता यं सम्बन्धुमीप्सति तत्सम्प्रदानम्। दानक्रियाकर्मनेव सम्बन्धुमिष्टस्य सम्प्रदानसंज्ञाविधानात् अजां ग्रामं नयतीत्यत्र ग्रामस्य हस्तं निदधाति वृक्षः इत्यत्र वृक्षस्य च न सम्प्रदानसंज्ञा ग्रामवृक्षयोरजहस्ताभ्यां सम्बन्धुमिष्यमाणत्वन्न तु तयोर्दानक्रियाकर्मतेप्सितत्वम्।

वृत्तिकारास्तु सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थसंज्ञेयमिति स्वीकुर्वन्ति। तत्र दानञ्चापुनर्ग्रहणाय स्वस्वत्वनिवृत्ति पूर्वकं परस्वत्वोत्पादनम्। एवञ्च यत्रापुनर्ग्रहणाय दीयते तत्रैव दानक्रियाकर्मणा सम्बन्धुमिष्टस्य सम्प्रदान संज्ञा। यथा- विप्राय गां ददाति इति। पुनर्ग्रहणाय रजकस्य वस्त्रदाने रजकस्य वस्त्रं ददातीत्यादौ तु सम्बन्धसामान्ये षष्ठ्येवेति वृत्तिकारसम्मतिः। अत एव पूर्वपक्षरूपेण वृत्तिकारमतमुपपादयता भट्टपादनागेशेनोक्तम्- ''यत्तु वृत्तिकाराः सम्यक् प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थ संज्ञेयम्। तथा च गोनिष्ठत्व स्वत्वनिवृत्तिः समानाधिकरण-परस्वत्वोत्पत्त्यनु-कूलव्यापारक्रियोद्देश्यस्य ब्राह्मणादेरेव सम्प्रदानम् पुनर्गहणाय रजकस्य वस्त्रदाने रजकस्य वस्त्रं ददातीति सम्बन्धसामान्ये षष्ठ्येवेत्याहुः।[3]

यद्यपि नागेशभट्टकौण्डभट्टाभ्यामयं वृत्तिकाराभिमतसिद्धान्तो न रोचते भाष्यविरोधात्, किन्तु भर्तृहरिणा वृत्तिकाराभिमते सिद्धान्ते एव स्वसम्मतिः प्रदर्शिता। तथा चोक्तम्-

**अनिराकरणात् कर्त्तुस्त्यागाङ्गंर्मणेप्सितम्।**
**प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम्।।[4]**

---

1. पा. सू.- 1.4.32
2. सिद्धान्तकौमुदी, कारकप्रकरणम्- 116
3. परमलघुमञ्जूषा कारकार्यविचारः पृ. 100
4. वा. का.- 3 श्लोक- 129

व्याख्यातञ्चैतत् तत्रैव हेलाराजेन अन्वर्थत्वात् सम्प्रदानस्य त्यागाङ्गमिति लक्षणलाभः। त्यागो दीयमानस्य स्वत्वनिवृत्त्या परस्वत्वोत्पादनम्। कन्यां ददातीति जन्यजनकभावाव्यावृत्तावपि स्वस्वामिभावसम्बन्धस्य निवृत्तेः, मुख्य एव ददात्यर्थः।

खण्डिकोपाध्यायः शिष्याय चपेटां ददातीत्यादौ वस्तुतोऽसत्यपि चपेटादिस्वाम्ये तदुपकारितया दातुः स्वामित्वाभिसन्धिरस्त्येव। यद्यपि प्रतिकूलरूपत्वात् चपेटायाः तदानीमुपयोगो नास्ति, तथापि फलद्वारेणास्त्येव परोपयोगित्वम् चपेटासहत्वे शास्त्रभ्यास योगत्वात् फलावाप्तेः[5] सारस्वतत्याकरणेऽपि सिद्धान्तोऽयं प्रतिपादितः। तथाहि- 'दानपात्रे ''सम्प्रदानकारके चतुर्थी''[6] इति मूलोक्तं व्याचक्षाणैः माधवाचार्यैरूक्तम् किञ्चिदुदिश्या पुनर्ग्रहणाय स्वद्रव्यत्यागो दानं तस्य तत्पात्रं यस्मै दीयते तत्''[7] स्वप्रतिपादितेऽस्मिन्नेवार्थे प्रमाणं प्रदर्शयता माधवाचार्येण चङ्गुदासस्यैकः श्लोकः प्रस्तुतः-

**सम्प्रदानं तदेव स्यात् पूजानुग्रहकाम्यया।**
**दीयमानेन संयोगात् स्वामित्वं लभते यदि॥**

एवञ्चैतेषां मते यत्र पुनर्ग्रहणाय दानं भवति। तत्र रजकस्य वस्त्रं ददाति घ्नतः पृष्ठं ददातीत्यादौ सम्प्रदानत्वाभावात् चतुर्थी न अपितु सम्बन्धसामान्ये षष्ठ्येव।

नागेशास्तु ''वृद्धिरादैच्''[8] इति सूत्रस्थ खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति भाष्यप्रयोग-विरोधात्, यत्रापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिसमानाधिकरण परस्वत्वोत्पादनं तत्रैव सम्प्रदानमिति न स्वीकुर्वन्ति।

तादृशसम्प्रदानत्वस्वीकारे खण्डिकोपाध्यायकर्तृक चपेटानिष्ठसंयोग- विशेषानुकूलोव्यापार इत्यर्थकः[9] खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति वाक्ये तादृशसम्प्रदानत्वाभावात् चतुर्थी असंगतैव स्यात्। अतः क्रियामात्रकर्मसम्बन्धाय क्रियायामुद्देश्यं यत् कारकं तत्वं सम्प्रदानत्वमिति परिष्कुर्वन्ति। लक्षणञ्चेदं 'कर्मणा यमभिप्रैति स सम्प्रदानम्''[10] इति सूत्रार्थफलितमेव। तथाहि कर्मणः क्रियायां साकांक्षितत्वात् क्रियालाभः। अभिप्रैतित्यस्य सम्बन्धुमिच्छतीत्यर्थः। एवञ्च कर्मसम्बन्धाय यं सम्बन्धुमिच्छति कर्त्ता स सम्प्रदानमिति। तथा च विप्राय गां ददातीत्यत्र दान क्रियाकर्मीभूत सम्बन्धाय विप्रस्य दानक्रियोद्देश्यत्वात्

---

5. वा हेलाराजकटीका, सा. समु. का. सं. 29
6. सारस्वतम् पृ. सं. 153
7. सारस्वतम्, माधवविवरणटीका पृ. सं. 353
8. महाभाष्य 1.1.11 पृ. सं. 113
9. परमलघुमञ्जूषा कारकार्थविचारः पृ. सं. 99
10. दुर्गासप्तशती 5.129

सम्प्रदानसंज्ञा। एतादृश सम्प्रदानत्व स्वीकारादेव-

''तदापदत्वासुरेन्द्राय स च युक्तं करोतु यत्'' इत्यादि संगच्छते। अन्यथा त्वत्रापि स्वस्वत्वनिवृत्ति पूर्वक परस्वत्वोत्पादनस्य विवक्षाभावात् असुरेन्द्रायेति चतुर्थी न स्यात्। अतः बहुतर प्रयोगसाधारणमिदं नागेशोक्तसम्प्रदान लक्षणम्।

अस्य लक्षणस्य कर्मत्वघटितत्वेन अकर्मक धातूनां योगे सम्प्रदानसंज्ञा कथं स्यादिति चेदुच्यते- ''अकर्मकक्रियोद्देश्यत्वं सम्प्रदानमिति''[11] लक्षणान्तरमाप कृतं नागेशभट्टेन। यथा- पत्येशेते इत्यादि। इदमपि लक्षणं ''क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्[12] इति वार्तिकार्थफलितार्थकथनमेव।

वैयाकरणभूषणकाराः कौण्डभट्टास्तु यत् क्रियाकर्मसम्बन्ध जन्यफलभागित्वेनोद्देश्यं यत् तत् सम्प्रदानमिति स्वीकुर्वन्ति।

तथा चोक्तम्- ''तच्च कर्मण यमभिप्रैति स सम्प्रदानम्'' इति सूत्रात् कर्मणा करणभूतेन यमभिप्रैति ईप्सति तत्कारकं सम्प्रदानमित्यर्थकाद् उदेश्यः।[13] एवञ्च कौण्डभट्टमते उद्देश्यत्वमेव सम्प्रदानत्वम्। तथा च विप्राय गां ददातीत्यत्र दानक्रियाकर्मकारकेण गोद्रव्येण यः स्वत्वरूपो विप्रस्य सम्बन्धस्वज्जन्यं फलं सुखादि, तद्भागित्वरूपेणोद्देश्यत्वात् विप्रस्य सम्प्रदानसंज्ञा। तदुक्तं नागेशभट्टेनापि- ''सम्प्रदानचतुर्थ्यर्थ उद्देश्यः[14] तथा च ब्राह्मणोद्देश्यकं गोकर्मकं दानमिति बोधः''।

ननु विप्रादौ स्वर्गरूपोपकारस्तु न साक्षादगामी किन्तु दुग्धाद्युपभोगरूपोपकार एवेति तज्जनकत्वस्य दुग्धादिद्वारा गवादाविव गवादिद्वारा तद्दानादावपि सम्भवात् दानादीनां तदर्थत्वात् ''तादर्थ्ये चतुर्थी''[15] इति वार्तिकेनैव चतुर्थीसिद्धौ कर्मणा यमभिप्रैति स सम्प्रदानम्'' इति सूत्रेण सम्प्रदानसंज्ञायाः प्रयोजनं न स्यादिति चेन्न, दानकर्मणो गवादेर्ब्राह्मणार्थत्वेऽपि दानक्रियायाः परलोकार्थत्वात्। अत एवोक्तं हेलाराजेन-

''तादर्थचतुर्थ्यां दानकर्मणो गवादेः सम्प्रदानार्थत्वेऽपि दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यन्तार्थस्य दानक्रियायामन्वयानुपपत्त्या कारकत्वानापत्तिः।''[16]

एवञ्च वृत्तिकारमते सम्प्रदानमित्यन्वर्थसंज्ञा अतो यत्र स्वस्वत्वनिवृत्तिपूर्वक परस्वत्वोपादनस्य

---

11. परमलघुमञ्जूषा कारकार्थ विचारः पृ. सं. 100
12. सि. कौ. वार्तिक, सं. 140, पृ. 116
13. वै. भू. सु. निर्णय पृ. 213
14. परमलघुपञ्जूषा कारकार्थ विचारः पृ. 101
15. सि. कौ. वार्तिक सं. 142, पृ. 110
16. वाक्यपदीयम् हेलाराजटीका- पृ. 132

विवक्षा तत्रैव सम्प्रदानत्वमतः पुनर्ग्रहणाय दीयमाने 'रजकस्य वस्त्रं ददातीति वाक्ये सम्बन्धसामान्ये षष्ठी।

नागेशभट्टकौण्डभट्टादिमते तु खण्डिकापाध्यायः शिष्याय चपेटां ददातीति भाष्य प्रयोगात् सम्प्रदानमिति नान्वर्थसंज्ञा, अतः पुनर्ग्रहणाय दीयमानेऽपि रजकाय वस्त्रं ददातीत्यत्रापि चतुर्थी।

अनयोः पक्षयोः कतरः पक्षः श्रेयान् इति विचारणायां नागेशादि सम्मतं मतमेव समीचीनमिति मदीयो विचारः। यतो हि यथोत्तरमुनीनां प्रामाण्यात् भाष्य सम्मतिरेव सर्वैराद्रियते। सम्प्रदानमिति महासंज्ञा करणातु सर्वनामस्थानादिसंज्ञावत् प्राचामनुरोधादेव, न त्वन्वर्थायेति। तया चोक्तम् ''उक्तभाष्यप्रामाण्यात् अन्वर्थमेवासिद्धम्। महासंज्ञाकरणं प्राचामनुरोधादेव सर्वनामस्थान संज्ञापद'।[17]

सम्प्रदानस्य भेदत्रयं स्वीकृतमस्ति कौण्डभट्टेन अनिराकर्तृ, प्रेरयितृ, अनुमन्तृ, चेति भेदात्। यथा- सूर्याय अर्घ्यं ददातीति। अत्र सूर्योऽनिदाकर्तृरूपमेव सम्प्रदानम्, यतोहि अनिराकर्तृरूपं सम्प्रदानं तदेव भवति, यत् कर्तुः प्रवृत्तिः निवृत्त्यन्यत्तर जनकव्यापाराभाववद् भवति। प्रकृते सूर्योऽपि अर्घ्यदातारं न तु प्रेरयति, न तु निराकरोति, न तु तदनुमोदत एव। अत सूर्यस्यानिराकर्तृरूपं सम्प्रदानत्वम्। तथा चोक्तम्- ''सूर्यायार्घ्यं ददाति इत्याद्यम्। नात्र सूर्यः प्रार्थयते, नानुमन्यते, न निराकरोति।''[18] प्रेरयितृ सम्प्रदानं तद् भवति यद् दान कर्तारं दान इष्टसाधनत्वादिबोधनद्वारा प्रेरयति। यथा- यो गां ददाति स स्वर्ग यातीति सम्बोधनम् विप्रेण मह्यं गां देहि' याचिते सति विप्राय गां ददाति। अत्र विप्रः दातारं दाने प्रेरयति आतोऽत्र विप्रः प्रेरकं सम्प्रदानम्।

अनुमन्तृ सम्प्रदानं यथा- उपाध्याय गां ददाति। अत्रोपाध्यायः दानस्यानुमोदनं करोति। अर्थात् स्वाभिलषिते दानं स्वयं प्रवृत्तस्य कर्तुः इदं तवेष्टसाधनम्'' इत्यादिरूपेण इष्टसाधनतां बोधयति। अतः उपाध्यायोऽनुयन्तृसम्प्रदानमिति।

---

17. वै. भू. सा. दर्पण व्याख्या पृ. 217
18. वै. भू. सा. सुबर्थनिर्णयः, पृ. 219

# न्यायनये मङ्गलस्य सफलत्वप्रदर्शनम्

श्रीराजेशकुमारः

भारतीयपरम्परायां कस्यापिकार्यस्य सफलाय आदौमङ्गलाचरणं विधीयते। मङ्गलस्य प्रयोजनं परिलक्ष्य महाभाष्यकारैरित्थं प्रतिपादितम्–

'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च' इत्यादि।[1]

तस्य मङ्गलस्य किं प्रयोजनमितिजिज्ञासायां न्यायनयज्ञैः मङ्गलस्य सफलत्वं साध्यते। तत्र किञ्चफलमितिजिज्ञासायां प्राचीनैः ग्रन्थस्य समाप्तिरितिमङ्गलस्य फलम्, नव्यैश्च विघ्नध्वंस एव मङ्गलस्य फलमितिसयुक्तिकं प्रतिपादितम्। मङ्गलस्य निष्फलत्वं साधयन्ति नास्तिकाः, यतो मङ्गलभावेऽपि नास्तिकादिग्रन्थेषु समाप्तिदर्शनात् मङ्गलभावेऽपि केषुचित् आस्तिकग्रन्थेषु निर्विघ्नपरिसमाप्त्यदर्शनाच्च। यदि च मङ्गलस्य समाप्तौ समाप्तौकारणत्वं स्वीक्रियते चेत्तर्हि मङ्गलाभावेऽपि समाप्त्यात्मककार्यस्य सद्भावाद् व्यतिरेकव्यभिचारापत्तिः। एवञ्च कादम्बर्यादिग्रन्थे–

'रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमः स्पृशे।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः॥'[2]

इत्यादिविंशत्तिसंख्याकमङ्गलश्लोकसद्भावेऽपि निर्विघ्नपरिसमाप्त्यात्मककार्यस्य अदर्शनाद् भवति अन्वयव्यभिचारः। व्यतिरेकव्यभिचारान्वयव्यभिचारदोषदुष्टत्वाच्च मङ्गलस्य समाप्तिसाधनत्वं सफलत्वञ्च नास्तीतिवेदप्रामाण्यानङ्गीकर्त्तारो नास्तिकाः प्रलपन्ति। नास्तिकैः मङ्गलस्य यत् निष्फलत्वं साधितं तन्न युक्तं यतः मङ्गलस्य सफलत्वे शास्त्रमेव प्रमाणम्। तथा च श्रुतिः–**''समाप्तिकामो मङ्गलमाचरेत्''**इति। यतोहि विघ्नसंशयेऽपि मङ्गलाचरणस्य आवश्यकत्वात्। उक्तञ्च प्रकाशटीकाकारेण वर्धमानोपाध्यायेन– **''मैवं योग्यानुपलम्भेनैहिकस्य मङ्गलविशेषस्याभावग्रहेऽपि ऐहिकामुष्मिकसाधारणमङ्गलमात्राभावस्य निश्चेतुमशक्यत्वात्। जन्मान्तरीयस्य तस्यायोग्यत्वात्। तथा च विशेषव्यभिचारेऽपि श्रुत्यासामान्यतः कारणत्वबोधना-योग्यतयापरिभवितुं शक्यम्। तथापि व्यभिचारसन्देहोऽस्त्येवेति चेन्न, प्रमाणप्रवृत्तौ बोध्यसन्देहस्याप्रतिबन्धकत्वादन्यथाप्रमाणमात्रोच्छेदापत्तेः। प्रत्युतानुकूलत्वं सन्दिग्धे न्यायः प्रवर्तते इत्यभ्युपगमात्।''**[3]

---

1. व्याकरणमहाभाष्यम्।
2. कादम्बरी, मङ्गलश्लोकः 1
3. प्रकाशटीका, पृ. 22

तस्य मङ्गलस्य निर्विघ्नपरिसमाप्तिरूपं फलं स्वीकृत्य न्यायसिद्धान्तदीपकारैः शशधराचार्यैरुच्यते- **"यतः तावदभीष्टकर्मणो निर्विघ्नपरिसमाप्तिमुद्दिश्य बहुषः प्रवर्तमानाविनायकार्चनदधिदूर्वादौ मङ्गले दृश्यते प्रेक्षावन्तः।"**[4]

तस्य मङ्गलस्य प्रतिबन्धकदुरिताद्युत्सारणद्वाराऽभीष्टसमाप्तिं प्रति कथं कारणत्वम् इतिजिज्ञासायां यद्युच्यते श्रुतिरेव प्रमाणम्, तन्न युक्तं श्रुतेरनाकलनात्। शिष्टाचारस्य अनिर्वचनात् शिष्टाचारस्यापि प्रमाणत्वं नैव सिद्ध्यति। तत्र किं नाम शिष्टाचारत्वमितिजिज्ञासायां शशधराचार्यैः शिष्टाचारस्य स्वरूपनिर्वचनाय षट् पक्षाः उपस्थापिताः। **"तथाहि किं शिष्टाचारत्वं वेदप्रामाण्याभ्युपगन्तृ-पुरुषोत्पाद्यमानत्वं वा, उद्देश्यविशेषितमेतदेव वा, एवम्भूतपुरुषेण वेदमूलकतया स्वीक्रियमाणत्वं वा, वेदमूलकतया प्रमीयमाणत्वं वा, वेदोपदिष्टहेतुभावक्रियावत्त्वमेव वा, अन्यद्वा।"**[5]

एतेषु षट्पक्षेषुप्रथमः पक्षोनैव युक्तो यतः पुरुषक्रियमाणजलताडनस्यापि शिष्टाचारत्वप्रसङ्गात्। घटादौ शिष्टाचारत्वप्रसङ्गाद् द्वितीयः कल्पोऽपि न समीचीनः। अवेदमूलकत्वात् वेदमूलकतया भ्रान्तपुरुषस्वी-कारसम्भवात् तृतीयः कल्पो नैव ग्राह्यः। वेदमूलकतया प्रमीयमाणत्वस्य असिद्धत्वात् चतुर्थः कल्पोऽपि नैव युक्तः। अनेन क्रमेण पञ्चमषष्ठकल्पयोरनिर्वचनीयत्वात् शिष्टाचारत्वस्य मङ्गलस्य सफलत्वे प्रमाणत्वं नैव सम्भवति इतिपूर्वपक्षरूपेण यद्भाषितमाचार्यैः तस्य समाधानमित्थं प्रस्तूयते-

**"क्षीणदोषपुरुषत्वमेव शिष्टत्वम्।"**

**"अत्रोच्यते क्षीणदोषपुरुषत्वमेव शिष्टत्वम्। तथाभूतत्वं च मन्वादीनामेव सुप्रसिद्धम्। तदाचारत्वं च तेन परलोकानुकूलतया क्रियमाणत्वं तेन प्रतिबन्धकदुरितवारणमुद्दिश्य क्रियमाणत्वं वा। अश्वमेधकारीर्यादौ च व्याप्तिः सुप्रसिद्धा। यत्कार्यं प्रति यस्य कारणत्वमन्यवयव्यति-रेकोपजीवनेन गृह्यते तत्कार्यमुद्दिश्य शिष्टेन क्रियमाणत्वमेव शिष्टाचारत्वम्।"**[6]

एतादृशं शिष्टाचारत्वं परिकल्प्य मङ्गलस्य सफलत्वे प्रमाणं प्रदर्श्यते शास्त्रकारैः **"मङ्गलं सफलं अविगीतशिष्टाचारविषयत्वात् इति।"**[7]अनेन अनुमानेन नैयायिकैः मङ्गलस्य सफलत्वं साधितम्। हेतुवाक्यघटकमविगीतत्वञ्च बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनत्वं बोध्यम्। निरुक्तहेतुवाक्ये अविगीतपदं नोपदीयते चेत्तर्हि **"श्येनेनाऽभिचरेन्यजेत"** इतिश्रुत्या श्येनयागस्य शत्रुनाशकत्वप्रतिपादनेन श्येनयोगे शिष्टाचारविषयत्वस्य विद्यमानत्वात् भवति व्यभिचारः। अतस्तद्वारणाय अविगीतत्वपदं विशेषणीयम्। श्येनयागस्य नरकसाधनत्वाद् बलवदनिष्टानुबन्धित्वात् न व्यभिचारः।

व्युत्क्रमप्रयुक्तदर्शादौ यागेव्यभिचारवारणाय शिष्टसमवेतत्वं प्रतिपादितम्। चैत्यवन्दनादौ व्यभिचार-वारणाय शिष्टकृतिविषयत्वमपि विशेषणीयम्।

---

4. न्या.सि.दी. पृ. 1
5. न्या.सि.दी. पृ. 1
6. न्या.सि.दी., पृ. 2
7. न्या.सि.मु. पृ. 9

तत्र तेनअनुमानेनमङ्गलस्य सफलत्वंसाधितमाचार्यैः। तत्र च फलजिज्ञासायामुच्यते-

**''दृष्टफलकत्वेऽदृष्टफलकल्पनायाः अन्यायत्वाद् उपस्थिततत्वाच्च समाप्तिरेव- तत्फलं कल्प्यते''**[8] इतिमुक्तावलीकारैः।

मङ्गलस्य समाप्तिफलकत्वेअनुमानमेवप्रमाणम्। तथाहि मङ्गलं सम्पतिफलकं समाप्त्य-न्याऽफलकत्वे सति सफलत्वात् इति। नास्तिकग्रन्थेषु मङ्गलाभावेऽपि समाप्त्यात्मककार्यस्य दर्शनात् योहि व्यतिरेकव्यभिचारः नास्तिकैः प्रदर्शितः स न युक्तः। यतस्तत्र जन्मान्तरीयमङ्गलस्य कल्पनात् इत्थं प्रवदितं यत्- **''कृतमङ्गलेन चारब्धं कर्म निर्विघ्नं परिसमाप्यते, प्रचीयते च। आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषाय। तस्य कर्म कर्तृसाधनवैगुण्यहेतुकत्वात्।''**[9] यत्र च मङ्गलसत्त्वेऽपि ग्रन्थस्य समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नोविघ्नप्राचुर्यं वा बोध्यमर्थात् बलवत्तरविघ्ननिवारणे बलवत्तरमङ्गलस्य कारणत्वात् न व्यभिचारः।

उक्तञ्च आचार्यैः **''साद्गुण्येऽपि विघ्नहेतूनां बलीयस्त्वात्। न चैवं किमनेनेति वाच्यम्, प्रचितस्यास्यैव बलवत्तरविघ्ननिवारणेऽपि कारणत्वात्। न हि धनविमुक्तमुदकमेकस्तृणस्तम्बो वारयितुं न समर्थ इति। तदर्थं नोपादीयते, सजातीयप्रचयसंवलितस्य तस्य शक्यत्वात्''**।[10]

एवञ्च विघ्नात्यन्ताभाव एव येषां स्वतः सिद्धः तेषां कृते मङ्गलस्य निष्प्रयोजनत्वमिति ये वदन्ति तन्मतमपि न युक्तम्। यतो विघ्नशङ्कया तदाचरणात्। अभिप्रायस्तुविघ्नस्य सद्भावे तस्य नाशार्थमवश्यकं मङ्गलं कर्त्तव्यम्। **''अन्यथानुपस्थितपरिपन्थिभिः पार्थिवैर्द्विरदयूथपतयो नाद्रियेरन्निति।''**[11]

एतेन सिद्ध्यति यत् विघ्नसंशये मङ्गलस्य उपादानमवश्यं कार्यम्। इदन्तु बोध्यम्- प्राचीनानां नये मङ्गलं विघ्नध्वंसद्वारा एव समाप्तिं जनयति। नव्यानां मते तु मङ्गलस्य फलं विघ्नध्वंस एव। तेषां मते समाप्तिस्तु बुद्धिप्रतिभादिकारणसमुदायेन भवति। विघ्नध्वंसविशेषे विनायकस्तवपाठस्यापि कारणत्वं नैयायिकैः स्वीकृतम्। तत्र समाप्तिसाधनं विघ्नध्वंससाधनं वा यन्मङ्गलं भवतितस्य मङ्गलस्य किं स्वरूप मिति जिज्ञासायां मङ्गलस्य लक्षणं प्रतिपादयति न्यायदीपकारः **''विघ्नोत्सारणाऽसाधारणकारणत्वे सति साध्यत्वमेव मङ्गलत्वम्।''**[12] अर्थाद् विघ्ननाशकत्वात् मङ्गलस्य सफलत्वं सिद्ध्यतीति। एवञ्च यत्र मङ्गलाभावेऽपि समापत्यात्मककार्यस्य दर्शनं भवति तत्र जन्मान्तरीयमङ्गलस्य कारणत्वम्, मङ्गलसत्त्वेऽपि यदि न हि समाप्तिस्तत्रापि अधिकमङ्गलस्य कारणत्वं कल्पनीयमिति न मङ्गलस्य निष्फलत्वमित्यलम्।

---

8. न्या.सि.मु., पृ. 9-10
9. किरण., पृ. 29
10. किरणावली. पृ. 33
11. किरणावली, पृ. 38
12. न्या.सि.दी., पृ. 3

# अपवर्गप्राप्तौ मनसः प्राधान्यम्

श्रीरामनिहोरचतुर्वेदी

भारतीयतत्त्वचिन्तकाः मनसः सुस्थिरं स्थानं नास्तीत्यभिप्रयन्ति। कामसङ्कल्पविचिकित्सादीनां विकाराणां समुच्चय एव मनः। तदेव आम्नायते बृहदारण्यके – 'कामःसङ्कल्पोविचिकित्सा-श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव'[1] इति। प्रायः सर्वेऽपि पौरस्त्यचिन्तकाः मन आत्मनोंऽशं एवेति वदन्ति। मनसः प्रकृतिप्रवर्तनानि अद्वैतवेदान्तानुसारेणावगन्तुं कश्चित् परिश्रमोऽत्र क्रियते। मनोनिरूपणे चिन्तकानां मध्ये मतभेदाः सन्ति। शरीरस्यान्तः साक्षित्वेन स्थितस्य आत्मनि उपाधिरेव चित्तम्। भारतीयचिन्तागतिमनुसृत्य आत्मभिन्नं स्वतन्त्रमस्तित्वं मनसो नैव। मनसः सत्ताऽपि सङ्कल्पेनैवेति योगवासिष्ठकारः[2] परामृशति। इदं मन एकमन्तस्थं परिणामसहितं च। मनो विषयविषयिरूपेण विविधैर्नामरूपैः परिणमति।

नैयायिकाः मनसोऽणुत्वं द्रव्यत्वं चाङ्गीकुर्वन्ति। न्यायकन्दल्यां श्रीधरमहोदयेन उक्तम्–'मनः चैतन्यरहितं चैतन्यानधिकरणत्वाद् घटवत्' इति। सुखदुःखज्ञापकं कश्चिदिन्द्रियं भवति मनः। वेदान्ते केचिद् मनसोऽनिन्द्रियत्वं सोदाहरणं विशदयति। तदेव श्रूयते कठोपनिषदि –

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥'[3] इति।**

मोक्षप्राप्तौ इन्द्रियाणां निग्रहार्थं मनः प्रग्रहोपयुज्यते।[4] पाश्चात्यचिन्तकाः स्वप्नावस्थायाः उपबोधमनसश्च महाप्राधान्यं कल्पयन्ति। फ्राइडमहोदयानुसारं गतकालेऽस्माभिरनुभूतानां विषयाणां इच्छायाश्च स्फुरणमेव स्वप्नः। अद्यतनप्रश्नानां परिहारमार्गं च मनः स्वप्ने अभिव्यंजयति।[5] अतोऽभिलषितार्थसाक्षात्कारः स्वप्नरूपेण परिणमतीति तस्याभिप्रायः। भारतीयचिन्तकास्तु स्वप्नस्य अतिप्रामुख्यं न प्रयच्छन्ति। ते जाग्रदादिचतुष्ववस्थासु अन्यतमत्वेन स्वप्नावस्थां परिगणयन्ति। माण्डूक्योपनिषदि आत्मनश्चातुष्पात्वं श्रूयते–'सोऽयमात्मा चतुष्पात्' इति। जाग्रत्, स्वप्नः, सुषुप्तिः, तुरीयेति चतुरवस्थाः सन्ति। जाग्रदवस्थाभिमानी आत्मा बाह्यप्रज्ञः, सप्ताङ्गः, स्थूलभुक् च। सः वैश्वानर[6] इत्युच्यते। जाग्रदवस्थायां यद् दृश्यते तत्सर्वं

---

1. ईशादिदशोपनिषदः, मोतीलालबनारसीदासः, दिल्ली, 1978, 1/5/3
2. Yogavasistha, Translation-Vihari Lala Mitra, Vol. 1, 4.43, Bhartiya Publishing Hous, Delhi, 1976, P. 221
3. ईशादिदशोपनिषदः, मोतीलालबनारसीदासः, दिल्ली, 1978, 1/3/10,
4. तदेव – 1/3/3
5. The Practice of mind control, Dr. B. Edwin, P. 34 (Thomson Publishers Ltd. London, 1965

मनःसृष्टमेवेति शाङ्करसिद्धान्तः। स्वप्नावस्थाभिमानी आत्मा अन्तःप्रज्ञः सप्ताङ्गः, प्रविविक्तभुक् च। सोऽयं तैजसेति[7] नाम्ना व्यवह्रियते। यस्यामवस्थायां सुप्तो न कश्चन कामं कामयते, न कश्चन स्वप्नं पश्यति, तथा सुप्तोत्थितस्य सुखमहमस्वाप्सं न किंचिदवेदिषमित्यनुभवश्च, सा सुषुप्तिः। सुषुप्तौ जीवात्मा परमात्मनि एकीभवति। प्रज्ञानघनः आनन्दभुक् चायं प्राज्ञ[8] इत्युच्यते। अस्यामवस्थायां कारणाविद्यायाः बन्धाभावाद् बन्धकत्वहेतुर्मन एव; किन्तु 'मनः प्राणमप्येति' इति श्रुतेर्मनः कथं बन्धहेतुर्भवेदिति चेदुच्यते, अज्ञानस्य मनसश्चाभिन्नत्वाद् इति। चतुर्थावस्थस्तुरीयो न अन्तःप्रज्ञः, न बहिष्प्रज्ञः, न प्रज्ञानघनः, अदृश्यः, अव्यवहार्यः, अग्राह्यः, अलक्षणः, अचिन्त्यः, एकात्मप्रत्ययसारः, शान्तः, शिवः, अद्वितीयश्च भवति।

अन्तःकरणं विषयप्रत्यक्षसमये विषयाकारेण परिणमति। परिणामोऽयं वृत्तिरित्युच्यते। वृत्तिश्चतुर्धा- मनः, अहंकारः, बुद्धिः, चित्तमिति। संशयात्मको मनः, निश्चयात्मिका बुद्धिः, अहङ्कारात्मकोऽहङ्कारः, स्मरणात्मकं चित्तं च।

आत्मसाक्षात्कारे मनसो प्रामुख्यमस्ति। जीविनो बन्धमोक्षयोर्मुख्यहेतुर्मन एव। विवेकचूडामणौ[9] श्रीशङ्करो मनोमयकोशम् एवं निरूपयति- ज्ञानेन्द्रियाणि मनश्च संयोज्य मनोमयकोशं भवति। नामरूपात्मकप्रपंचस्य कल्पने निदानभूतस्य मनसोऽधीना एव सर्वेऽपि लोकव्यवहाराः। श्रोत्रादिपंचेन्द्रियहोतृभिः शब्दाद्याज्यधारया प्रज्वालितैर्वासनाकाष्ठैर्निरन्तरमुद्दीप्यमानो मनोमयाग्निः प्रपंचमपि भस्मीकरोति। संसारबीजभूता अविद्या मन एव। मनसो वासनानाशे सर्वं नश्यति, मनसो विजृम्भणे सर्वं विजृम्भति। यथा अनिलो मेघान् वायुं च दूरं नयति, तथा मनो बन्धे मोक्षे च हेतुः। मनः पुरुषमादौ देहगेहादिपाशैर्बध्वा स्वस्वरूपादपनयते, तदेव मनोऽनन्तरं विषयविरक्तिं कृत्वा देहादिबन्धनात् प्रमुच्य ब्रह्मनिष्ठं करोति। कामक्रोधादिरजोगुणधर्मैः कलुषितं मनो बन्धहेतुः रजस्तमोरहितं निर्मलं मनो मोक्षहेतुश्च। विषयरूपे घोरविपिने मनो नाम महान् व्याघ्रो भक्षणार्थी सन् संचरतीत्यतो मुमुक्षुस्तत्पथेन मा गच्छतु। देवतिर्यगादिशरीराणि, ब्राह्मणादिवर्णाः, ब्रह्मचर्याद्याश्रमाः, शब्दादिगुणाः, मृदादिकारणानि, घटादिकार्याणि च जीवस्य जाग्रदवस्थायां स्थूलरूपेण, स्वप्नावस्थायां सूक्ष्मरूपेण च सदा मनसा सृज्यन्ते। एवं मनो निःसङ्गं सर्वामात्मानं देहेन्द्रियादिषु अहं ममेति अविद्याबन्धैः सम्बद्धड लौकिकवैदिकव्यवहारेषु तेषां फलोपभोगेषु च परिभ्रामयति। तदा अविवेकिदेहादिषु आत्मबुद्धिरध्यस्यति। एवं संसारहेतुभूतोऽध्यासो मनःकल्पितमेव। अतो मोक्षप्राप्तये भवबन्धमूलस्य अन्तःकरणस्य नैर्मल्यमवश्यंभावि। मनःशुद्धडा मुक्तिः करतलामलकवत् सिद्धड्ति।

मनसः शुद्धीकरणं कथं कर्तव्यमित्युच्यते - 'मुमुक्षुर्विषयविरक्तः सन् सर्वकर्माणि मनसा सन्यस्य नित्ये ब्रह्मणि मनः केन्द्रीकृत्य श्रवणमनननिदिध्यासनैरभ्यस्य मनोविक्षेपं धुनोति'[10] इति।

6. ईशादिदशोपनिषदः, मोतीलालबनारसीदासः, दिल्ली, माण्डूक्योपनिषद्-1.3, पृ. 171 ।
7. तदेव-1.4, पृ.-696
8. तदेव-1.5, पृ.-696
9. विवेकचूडामणिः, श्रीशङ्कराचार्यः, श्लो. 161-175, अद्वैताश्रमः कलकत्ता, 1978, पृ. 67
10. विवेकचूडामणिः, श्रीशङ्कराचार्यः, श्लो. 184, अद्वैताश्रमः कलकत्ता, 1978, पृ. 68

मनोदाढर्ड्याय तद्द्वारा मोक्षप्राप्तये च बहवः उपायाः आर्षचिन्तकैः स्वीक्रियन्ते। तेषु योगमार्गं प्रामुख्यमर्हति। योगशास्त्रोपज्ञाता पतंजलिः स्वरूपावस्थितिर्मोक्ष"[11] इति, तदवाप्तिर्मनोवृत्तिनियन्त्रणसाध्येति चाभिप्रैति। मनस एकाग्रतायै यमनियमाद्यष्टयोगाङ्गानामभ्यासः कर्तव्यः। योगेन चित्तस्य शक्तिर्वर्धते। संसारिणो जितेन्द्रियस्य योगिनश्च चित्तभेदः सङ्कल्पातीतो भवति। लौकिकजीवनेऽपि मूढमपेक्ष्य पण्डितस्य मनसो वैशिष्ट्यं सर्वेषां सुविदितमेव।

---

11. योगसूत्रम्, पतंजलिः 1/1/11, मोतीलालबनारसीदासः दिल्ली, 1971 पृ 7

# बौद्धाभिमतप्रमाणस्वरूपविमर्शः

डॉ. विष्णुपदमहापात्रः

बौद्धनये 'जरामरणादयः दुःखानि भवन्ति, तेषां दुःखानां कारणानि अपि विद्यन्ते। दुःखानां निवृत्तिः सम्भवति, दुःखनिरोधोपायाः विद्यन्ते' इति आर्यचतुष्टयं प्रसिद्धम्। तत्र निर्वाणं शान्तं भवतीति निर्वाणाख्यपरमतत्त्वप्राप्तये बौद्धाः सततं चिन्तनपरायणाः भवन्ति। दुःखानां सत्वे निर्वाणस्य असम्भवात् तादृशदुःखादितत्त्वानां निरासार्थम् अनात्मादितत्त्वसिद्ध्यर्थं जगत्कल्याणाय च मेयाधीना मानसिद्धिः इति बौद्धाभिमतन्यायमभ्युपेत्य प्रमाणतत्त्वं विविच्यते बौद्धदार्शनिकैः। प्रमाणसमुच्चयग्रन्थस्य प्रारम्भे दिङ्नागेन इत्थं निगदितं–

**प्रमाणभूताय जगद्धितैषिणे प्रणम्य शास्त्रे सुगताय तायिने।**
**कुतर्कसम्भ्रान्तजनानुकम्पया प्रमाणसिद्धिर्विधिवद्विधीयते।।**[1]

प्रमाणघटकीभूता प्रमा सम्यग्ज्ञानरूपा भवति। अर्थात् यस्य ज्ञानस्य यो हि विषयः तस्य ज्ञानमेव सम्यग्ज्ञानम्। ज्ञानमीमांसाशास्त्रे बौद्धाः प्रयोगवादिनः (pragmatist) सन्ति। तेषां नये ज्ञानमात्रेण अभीष्टस्य सिद्धिर्भवति। उक्तञ्च न्यायबिन्दुकारेण **"सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिरिति तद् व्युत्पाद्यते"**[2]। प्रेक्षावतां विवेचकानां प्रवृत्त्यर्थं प्रकरणाभिधेयस्य सम्यग्ज्ञानस्य सर्वपुरुषार्थसिद्धिहेतुत्वं प्रयोजनमुक्तं सौगतैः। एतेन ज्ञायते यज्ज्ञानं समेषां प्रयोजनं सम्पादयति तज्ज्ञानं सम्यग्ज्ञानमिति। अत एव प्रमाणलक्षणनिर्वचनावसरे मोक्षाकारगुप्तैः निगदितं–**"प्रमाणं सम्यग्ज्ञानमपूर्वगोचरम्। प्रमीयतेऽर्थोऽनेनेति प्रमाणम्, तदेव सम्यग्ज्ञानं, संदेहविपर्यासदोषरहितत्वात्"**[3] **इति**। सम्यग्ज्ञानस्य सामान्यलक्षणं प्रतिपादयति धर्मकीर्तिः–'अविसंवादकं ज्ञानं सम्यग्ज्ञानम्' अर्थात् ज्ञाने येन रूपेण यस्य विषयस्य प्रकाशो भवति तेनैव रूपेण यदि तत्र तद्विषयस्य सम्प्राप्तिर्भवेत्तर्हि तादृशं ज्ञानम् अविसंवादकम्, तदेव सम्यग्ज्ञानम्। अत्र अर्थस्याधिगतिरेव प्रमाणस्य फलम्। अधिगते चार्थे प्रवर्तितः पुरुषः प्रापितश्चार्थः। तथा च सत्यार्थाधिगमात्समाप्तः प्रमाणव्यापारः। अत एव अनधिगतविषयं प्रमाणम्। येनैव हि ज्ञानेन प्रथममधिगतोऽर्थस्तेनैव प्रवर्तितस्य पुरुषस्य अर्थस्य प्राप्तिः। तत्रैवार्थे किमन्येन ज्ञानेनाधिकं कार्यम्। एवञ्च अर्थक्रियार्थिभिश्चार्थक्रियासमर्थार्थप्राप्तिनिमित्तं ज्ञानं मृग्यते। यच्च तैर्मृग्यते तदेव तेन शास्त्रे विचार्यते। ततोऽर्थक्रियासमर्थवस्तुप्रदर्शकं सम्यग्ज्ञानमिति। सम्यग्ज्ञानस्यार्थक्रियास्थितित्वप्रतिपादनाय वार्तिककारैरुच्यते–

---

1. प्र. स. 1-1
2. न्यायबिन्दुः, पृ. 2
3. बौद्धतर्कभाषा, पृ. 2

प्रमाणमविसंवादि ज्ञानमर्थक्रियास्थितिः।
अविसंवादनं शब्देऽप्यभिप्रायनिवेदनात्।।[4]

अभिप्रायस्तु अविसंवादिज्ञानं प्रमाणमिति प्रतिपादनेन नाज्ञानमिन्द्रियार्थसन्निकर्षादेः ग्रहणम्। तच्च ज्ञानं कीदृशमिति जिज्ञासायामुच्यते अविसंवादि इति। अविसंवादस्य घटकीभूतस्य विसंवादशब्दस्यार्थोभवति विसंवादनं विसंवादः वञ्चनम्। तद्योगाद् विसंवादि। तद्भिन्नं सम्यग्ज्ञानं अविसंवादि इति। यथास्थितस्यार्थस्य क्रियायाः स्थितिः प्रमाणयोग्यत्वमविसंवादत्वमिति। यस्माद् ज्ञानादर्थं परिच्छिद्यापि न प्रवर्तते, प्रवृत्तो वा कुतश्चित् प्रतिबन्धादेरर्थक्रियां नाधिगच्छति तदपि प्रमाणमेव। तत्र प्रमाणयोग्यता- लक्षणस्य अविसंवादस्य विद्यमानत्वात्। प्रमाणयोग्यत्वात्मकं यदविसंवादकत्वं तत्र यत् प्रमाणयोग्यत्वमुक्तं तत् कथम् असत्याम् अर्थक्रियाप्राप्तौ निश्चीयते इति जिज्ञासायामुच्यते यत् - तावदसकृद् व्यहाराभ्यासाद् दर्शनमात्रेणोपलक्षितभ्रमविविक्तस्वरूपविशेषं साधनाध्यक्षम्। तस्य स्वत एव प्रमाणयोग्यतानिश्चयः कृत्रिमाकृत्रिमणिरूप्यादितत्त्वनिश्चयवत्। अनुमानस्य च साध्यप्रतिबद्धजन्मनो व्यभिचाराशंकाविरहात्। अर्थक्रियानिर्भासं तु प्रत्यक्षं स्वत एवार्थक्रियानुभवात्मकम्, न तत्र परार्थक्रियाऽपेक्षत इति तदपि स्वतो निश्चितप्रामाण्यम्। अर्थ एवार्थक्रियापरम्परानुसरणादनवस्थादोषोऽपि दुःस्थ एव। यत्त्वनभ्यस्तदशायां संदिग्धप्रामाण्यम्। उत्पत्तौ तस्यार्थक्रियाज्ञानाद् अनुमानाद्वा प्रामाण्यं निश्चीयते। एतच्चाविसंवादनं बाह्यार्थेतरवादयोः प्रमाणलक्षणं समानमेव। अविसंवादकं ज्ञानं प्रमाणमिति प्रमाणलक्षणं लोकव्यवहाराय कल्प्यते। प्रतिपादितञ्च तर्कभाषाकारेण - **"अविसंवादकं ज्ञानं लोके सम्यग्ज्ञानमभिधीयते। न च संशयविपर्यासज्ञानयोरविसंवादकत्वमस्ति। यथा स्थाणुर्वा पुरुषोवेति ज्ञानस्य, मरीचिकासु वा जलज्ञानस्य। अपूर्वो गोचरो अस्येत्यपूर्वगोचरम्। गोचरोविषयो घटादिः। तस्मादुत्पन्नं तदर्थं प्रापणयोग्यं ज्ञानं प्रमाणम्"** इति।

"घटोऽयम्" इत्यादि ज्ञानात् प्रवर्तमानस्य सम्बन्धः यद्यपि विद्यते तस्य गृहीतग्राहित्वात् प्रामाण्यं नाङ्गीक्रियते बौद्धैः। अतः प्रमाणस्य द्वितीयलक्षणं प्रतिपादितं वार्तिककारैः **"अज्ञातार्थप्रकाशो वा स्वरूपाधिगतेः परम्"**[6] अर्थात् प्रकाशनं प्रकाशः अज्ञातस्य अर्थस्य प्रकाशो ज्ञानं तत् प्रमाणम्। अर्थपदोपादानेन द्विचन्द्रादिज्ञानस्य परिहारः। अज्ञातपदोपादानेन सांवृत्तस्यावयव्यादिविषयस्य निरासः, पृथग् गृहीतानामेव रूपादीनामेकत्वेन विकल्पनात्। स्मरणं च पूर्वगृहीतार्थविकल्परूपत्वान्नाधिकग्राहि। गृहीते च अविसंवादकज्ञानस्य प्रमाणत्वम्, स्मरणप्रवर्तकत्वेन इदं प्रमाणलक्षणम्। अत्र शंका उदेति प्रमाणस्य लक्षणद्वयस्वीकारे को विशेषः? इति तत्रोच्यते अविसंवादिभ्योऽज्ञातार्थप्रकाशकं ज्ञायते न तु ज्ञानत्वादिभ्य इति लक्षणेन पूर्वस्यापेक्षणीयता इति परस्य लक्षणस्य नास्ति कश्चिद् विशेष इति यदि उच्यते तर्हि अविसंवादित्वेऽपि अज्ञातार्थप्रकाशनपेक्ष्यत एव, नान्यथा सांवृत्तस्य निरासः कर्तुं शक्यः। तस्मादुभयमपि परस्पर-सापेक्षमेव लक्षणं ज्ञेयं स्वीकार्यञ्च। एतेन अज्ञातार्थप्रकाशकत्वे सति

4. प्रमाणवार्तिककारिका 1-3
5. वौद्धतर्कभाषा, पृ. 2
6. प्रमाणवार्तिकम् कारिका 7

यथावस्तुस्थितिप्रतिपादकं ज्ञानमविसंवादकज्ञानमिति प्रमाणलक्षणं फलितं भवति।

तत्रेदमवधातव्यं यत् सारूप्यं वाऽर्थाकारतां वा प्रमितिकारणमिति सौगताः स्वीकुर्वन्ति। तेषां सिद्धान्ते अनधिगतार्थज्ञापकं ज्ञानं प्रमाणमिति प्रमाणलक्षणं प्रसिद्धम्। दिङ्नागैस्तु विशेष्यसारूप्यस्य प्रमाणत्वं विषयाकारमर्थनिश्चयश्च प्रमाणस्य फलमित्यभ्युपगतम्। तत्त्वसंग्रहकारेण शांतरक्षितेन सारूप्ययोग्यता प्रमाणं, विषयाधिगतिः संवित्तिश्च प्रमाणफलमिति प्रतिपादितम्। बौद्धानां सिद्धान्ते प्रमाणफलयोरभेदात् यद्यपि प्रमाणं ज्ञानरूपं तथापि ते विषयाकारितामेव प्रमाणमित्यभ्युपगच्छन्ति। तत्र यद्यपि ज्ञानगतसारूप्यं ज्ञानस्वरूपमेव तथापि ज्ञानस्य विषयाकारपरिणतिरिति तु इयमत्यन्तजटिलप्रक्रिया।

यद्वा भवतु अविसंवादकं ज्ञानं प्रमाणमिति प्रमाणलक्षणं यद् बौद्धैः साधितं तच्च प्रमाणं प्रत्यक्षानुमानभेदाद् द्विविधम्। उक्तञ्च षड्दर्शनसमुच्चयकारेण–

**"प्रमाणे द्वे च विज्ञेये तथा सौगतदर्शने।**
**प्रत्यक्षमनुमानं च सम्यग्ज्ञानं द्विधा मतः"[7]**

**"प्रत्यक्षमनुमानं च"[8]** इति धर्मकीर्तिना।।

प्रमाणवार्तिककारैस्तु **"मानं द्विविधं विषयद्वैविध्यात् शक्त्यशक्तितः"[9]** इति अर्थात् स्वलक्षण-सामान्यलक्षणरूपतया विषयस्य द्वैविध्यात् मानं प्रत्यक्षानुमानभेदाद् द्विविधम्। शाब्दादिकमपि हि प्रमाणं भवत् सविषयं वक्तव्यम्, शाब्दादिविषयस्य स्वसामान्यलक्षणादतिरिक्तत्वाभावात् शाब्दादीनां प्रमाणान्तरत्वं नास्तीति बौद्धानामाशयः। 'विषयद्वैविध्यात्' इति यदुक्तं तत्र कस्माद्विषयद्वैविध्यमिति जिज्ञासायामुच्यते "शक्त्याशक्तितोऽर्थक्रियायाम्" अर्थात् स्वलक्षणस्यार्थक्रियाशक्तत्वात्, विजातीयव्यावृत्त्युपकल्पितस्य च सामान्यस्याशक्तत्वाद् विषयद्वैविध्यमिति।

तत्र बहुवादिसम्मतत्वाद् आदौ प्रत्यक्षं निरूपयति – प्रतिगतमक्षं प्रत्यक्षम्। अक्षमिन्द्रियं चक्षुः श्रोत्रघ्राणजिह्वाकायाख्यम्। तस्मादुत्पन्नं ज्ञानं प्रत्यक्षमभिधीयते। वस्तुतः प्रतिगतमक्षमिति यत्प्रतिपादितं तत् व्युत्पत्तिमात्रम्, प्रवृत्तिनिमित्तं तु प्रत्यक्षशब्दस्यार्थः साक्षात्कारित्वमेव पंकजवद् रूढिवशाद् बोध्यम्। प्रथमविभक्तस्य प्रत्यक्षस्य किं सामान्यलक्षणमिति जिज्ञासायां बौद्धाः इत्थं प्रवदन्ति–ज्ञानमात्रे कोऽपि निश्चितविषयः विद्यते, यद्विषयकं यज्ज्ञानं तस्मिन्निर्धारितविषये यदि तज्ज्ञानस्योत्पत्तिर्भवति तर्हि तादृशं ज्ञानं प्रत्यक्षमिति। तथाह– बसुवन्धुः 'ततोऽर्थाद्विज्ञानं प्रत्यक्षम्। इति। वार्तिककारस्तु–

**प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिद्ध्यति।**
**प्रत्यात्मवेद्यः सर्वेषां विकल्पो नाम संश्रयः।।[10]**

---

7. षडदर्शनसमुच्चयः कारिका 8
8. न्यायबिन्दुः, पृ. 10
9. प्रमाणवार्तिकम् 2-1
10. तदेव

"प्रत्यक्षं कल्पनापोढं नामजात्याद्यसंयुतम्"[11] इति दिङ्नागः। अर्थाद् इन्द्रियेण सह विषयसन्निकर्षान्तरं विषयस्य या विशुद्धप्रतीतिः तत्र प्रत्यक्षे विषयमात्रस्यैव प्रकाशः नास्ति च कापि कल्पना, नामजात्यादिरहितम् एतादृशं ज्ञानं प्रत्यक्षं भवति। वार्तिककारैस्तु भ्रान्त्यादिज्ञानेऽतिव्याप्तिवारणाय अभ्रान्तपदमभ्युपगत्य **"कल्पनापोढमभ्रान्तं प्रत्यक्षमिति"** प्रत्यक्षलक्षणं स्वीकृतम्। तत्र बौद्धसिद्धान्ते द्रव्यगुणजात्यादिपदार्थानां पृथक् सत्तात्वानभ्युपगमात् द्रव्यादिविषयिणीधारणा कल्पनामात्रम्। तच्च प्रत्यक्षं चतुर्विधम्—इन्द्रियज्ञानं, मानसज्ञानं, स्वसंवेदनं योगिज्ञानं चेति। चतुर्विधेषु इन्द्रियप्रत्यक्षं तावत् चक्षुरादीन्द्रियपञ्चकाश्रयेणोत्पद्यमानं बाह्यरूपादि पञ्चविषयालम्बनमिन्द्रियप्रत्यक्षम्। उक्तञ्च - वार्तिककारेण

**संहृत्य सर्वतः चिन्तां स्तिमितेनान्तरात्मना।**
**स्थितोपि चक्षुषा रूपमीक्षते साक्षजा मतिः॥**[12]

अर्थात् संहृत्याकृष्य सर्वतो विकल्पनीयाच्चिन्तां स्तिमितेन सर्वविकल्पविगमाद् अविक्षिप्तेनान्तरात्मना चेतसा स्थितोऽपि पुरुषश्चक्षुर्विज्ञानेन रूपमीक्षते, साक्षजा निर्विकल्पामतिः इन्द्रियप्रत्यक्षमेव। मानसप्रत्यक्षं तावत् **"स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं मनोविज्ञानं मानसमिति"**[13] तर्कभाषाकारः। मानसप्रत्यक्षलक्षणान्तर्गत स्वशब्देनेन्द्रियज्ञानमभिमतम्। वार्तिककारस्तु-

**तस्मादिन्द्रियविज्ञानान्तरप्रत्ययोद्भवः ।**
**मनोऽन्यमेव गृह्णाति विषयं नान्यदृक् ततः॥**[14]

स्वसंवेदनं तावत् सर्वचित्तचैत्तानामात्मसंवेदनं स्वसंवेदनम्। चित्तं वस्तुमात्रग्राहकं ज्ञानम्। उक्तञ्च वार्तिककारेण-

**अशक्यसमयो ह्यात्मा रागादीनामनन्यभाक्।**
**तेषां मतः सुसंवित्तिर्नाभिजल्पानुषंगिणो॥**[15]

चित्तस्य एकाग्रतातः उत्पद्यमानं ज्ञानं योगिप्रत्यक्षम्। तथाहि-

**प्रागुक्तं योगिनां ज्ञानं तेषां तद् भावनामयम्।**
**विधूतकल्पनाजालं स्पष्टमेवावभाषते॥**

**कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः ।**
**अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव॥**[16]

---

11. प्रमाणसमुच्चयस्य प्रत्यक्षप्रकरणम्
12. प्रमाणवार्तिकम् प्रत्यक्षपरिच्छेदः कारिका 3-24।
13. बौद्धतर्कभाषा पृ. 241
14. प्रमाणवार्तिकम् 3-243 ।
15. प्रमाणवार्तिकम् 3-181।
16. प्रमाणवार्तिकम् 3-282 ।

बौद्धमते स्वार्थपरार्थभेदेन अनुमानं द्विविधम्। तत्र अनुमानस्य सामान्यलक्षणं तावत् – "मीयतेऽर्थोऽनेनेति मानम्"। अनुपश्चान्मानमनुमानम्। लिङ्गग्रहणलिङ्गलिङ्गिसम्बन्धस्मरणयोः पश्चाद् यद्विज्ञानं पर्वतादौ धर्मिणि परोक्षवस्त्वालम्बकं तदेवानुमानब्देनाभिधीयते[17] इति तर्कभाषाकारः। न्यायबिन्दौ तावत् "अन्यत् सामान्यलक्षणम्। सोऽनुमानस्य विषयः"[18] इति। वार्तिके च

स्वलक्षणे च प्रत्यक्षमविकल्पतया विना।
विकल्पेनं न सामान्यग्रहस्तस्मिन्नतोऽनुमा[19]॥

तत्र द्विविधेषु अनुमानेषु स्वार्थानुमानं तावत् स्वस्मै यत्तत् स्वार्थानुमानं ज्ञानात्मकम्। पक्षसपक्षविपक्षेति त्रिरूपलिङ्गाख्यानं परार्थानुमानमिति बौद्धानां सिद्धान्तः। तत्रेदमपि ज्ञेयं ग्राह्याध्यवसायभेदात् प्रमाणस्य विषयः द्विविधः। तत्र प्रत्यक्षस्य प्रतिभासमानं स्वलक्षणं ग्राह्यः। प्रत्यक्षस्य पृष्ठभाविनो विकल्पस्य प्रतिभासमानं सामान्यम् अध्यवसेयः। सामान्यमपि उर्ध्वतालक्षणतिर्यग्लक्षणभेदात् द्विविधम्। एकघटव्यक्तौ सजातीयव्यावृत्तायामनेकक्षणसमुदायः सामान्यम् ऊर्ध्वतालक्षणं साधनं प्रत्यक्षस्य विषयो भवति। विजातीयव्यावृत्तास्त्वनेकव्यक्तयः तिर्यक्सामान्यं व्याप्तिग्राहकप्रत्यक्षस्य विषयो भवति। अनुमानप्रमाणस्य तु सामान्यं ग्राह्यं भवति। अध्यवसायस्तु सर्वदा स्वलक्षणमेवभवतीति सौगताः निगदन्तीति।

17. बौद्धतर्कभाषा पृ. 8
18. न्यायबिन्दुः 1/16-17
19. प्रमाणवार्तिकम् 3/75

# अद्वैतशैवतन्त्रे मुक्तिस्वरूपविवेकः

डॉ. जवाहरलालः

शैवसिद्धान्तस्य शैववेदान्तसिद्धान्तस्य वीरशैवमतस्य चेत्यादीनां ज्ञानसम्मतानां तत्त्वानामुद्गमस्थानं काश्मीर एव। इह नवम्यां शताब्द्यामाचार्येण वसुगुप्तेन यदा स्पन्दकारिकाग्रन्थो व्यरचि, तदाधारेणैवानन्तरं देशे शैवमतप्रचारोऽजनि। यस्याः स्पन्दकारिकायाः वैशिष्ट्यं विद्यते खलु तन्त्रशास्त्रे। काश्मीरकं शैवदर्शनमेव त्रिकदर्शनमुच्यते। शिवः शक्तिः नरश्चेति तत्त्वानां समूह एव 'त्रिकम्' इत्यभिधीयते। एकमेव शिवतत्त्वं स्वकीयया स्वातन्त्र्यशक्त्या त्रिविधं भवति। अस्मिन् दर्शने परमसत्तारूपः शिवो ज्ञानक्रियालक्षणः, अत एव जगतो निमित्तोपादानादिकारणत्वाज्जगन्निर्माता, विश्वमयो विश्वोत्तीर्णश्च स्वीकृतः। **''चितिः स्वतन्त्रा विश्वसिद्धिहेतु'' "सा स्वभितौ विश्वमुन्मीलयति"** इत्यादिभिः सूत्रैः प्रतिपादितं तस्य स्वातन्त्र्यमेव जगन्निर्माणकारणम्। वेदान्तसम्मतस्य चिद्रूपस्य ब्रह्मणो न जगत्कर्तृत्वम्। तद्दर्शने मायैव संसारजननी। सा च न ब्रह्मणो भिन्ना नाप्यभिन्ना, न सती नाप्यसती, अपि तु अनिर्वचनीस्वभावा। इदमेव तद्दर्शनाद् अस्य 'त्रिक' दर्शनस्य वैशिष्ट्यम्। तेषामपि मुख्यं लक्ष्य भवति मोक्षः। यतः सर्वेषां दर्शनानां एकमेव लक्ष्यं सांसारिकदुःखपीडितजनानामुद्धारः यथा वैदिकावैदिकदर्शने प्रसिद्धः तथैव तान्त्रिकाणामपि तादृशं लक्ष्यं प्रसिद्धमेव। अत एव अद्वैतशैवतन्त्रमभ्युपगत्य किञ्चिदुपस्थाप्यते।

वस्तुतः अद्वैताभिमतं शाखाद्वयं प्रसिद्धम्। तत्र प्रथमा शाखा स्पन्दशाखा, द्वितीया च प्रत्यभिज्ञा शाखा स्पन्दशाखामते च मुक्तावस्थायां जीवः शिवो भवति, सर्वकर्तृत्वं सर्वज्ञत्वं च प्राप्नोति। उक्तञ्च **''अलेपको विशुद्धात्मा सिद्धिं प्रात्य शिवो भवेत्''**[1] इति। शिवज्ञानमतिरिच्य किमपि तत्त्वम् इह संसारे नास्ति, न वा तत्र विद्यते कश्चित् संशयः। तथाहि– **''नातः परतरं ज्ञानं शिवादवनि गोचरे। य एवं तत्त्वतो वेद स शिवो नात्र संशयः''**[2] इति। जीवः यदा मुक्तो भवति तदा स आत्मानं परतत्त्वमवगत्य स्वात्मनि जगतोऽवस्थितिः, तस्य अधिष्ठाता इत्यादिकं मनुते। तथाहि–

**अहमेवपरं तत्त्वं मयि सर्वमिदं जगत्।**
**अधिष्ठाता च कर्ता च सर्वस्याहमवस्थितः॥**[3]

**"तदन्ते शाश्वतं पदम्"** इति मालिनीतन्त्रादवगम्यते यत् शाश्वतपदप्राप्तिः परमपदप्राप्तिश्च मुक्तिरेव।

---

1. स्वच्छतन्त्रम् 12–133
2. मालिनीविजयतन्त्रम् 23–38
3. मालिनीविजयतन्त्रम् 9–52

**अनेन क्रमयोगेन संप्राप्तः परमं पदम्।**
**न भूयः पशुतामिति शुद्धस्वात्मनि तिष्ठति।।**[4]

स्वच्छन्दतन्त्रेऽपि अपुनर्भवता एव मुक्तिरिति व्यपदिष्टा विद्यते। यः मुक्तिप्राप्तये उपर्युक्तो भवति स शिवशक्तिपातबलाद् ऊर्ध्वगतिं सम्प्राप्य परमतत्त्वं शिवतत्त्वमवाप्नोति। उक्तञ्च–

**मुक्तेस्तु भाजनं येऽत्र अनुध्यताः ( कृतशक्तिपाताः ) शिवेन तु।**
**ऊर्ध्वं गच्छन्ति ते सर्वे शिवं परमनिर्मलम्।**[5]

तत्र ऊर्ध्वगतिशब्दस्य कोऽर्थः इति जिज्ञासायामुच्यते शिवैक्यप्राप्तिरेव ऊर्ध्वतिः। **"उर्ध्वमिति शिवैक्यप्राप्तिरेव एषामूर्ध्वगतिरित्यर्थ"** इति स्वच्छन्दतन्त्रस्य टीकाकारः क्षेमराजः गुरुरपि शिष्यस्य आत्मकल्याणं कर्तुं शक्नोति। गुरुः स्वशुद्धोपदेशद्वारा शिष्यं सन्मार्गं दर्शयति। तथाहि–

**गुरुणा तन्त्रविदुषा ह्यात्मा वै निर्मलीकृतः।**
**न भूयो मलतां याति शिवत्वं याति निर्मलम्।।**[6]

गुरूपदेशेन यथा परमतत्त्वस्यावाप्तिः तथैव दीक्षाद्वारा अपि शिवतत्त्वस्य प्राप्तिः सम्भवति। तत्रैव उच्यते- **"दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि"**इति। भट्टश्रीकल्लटस्य स्पन्छकारिकायामुल्लिखितं विद्यते यत् निरावरणचिद्रूपात्माशक्तिप्रकाशेन मुक्तजीव ईश्वरो भवति। ईश्वर भवति। सर्वज्ञः सर्वकर्ता भवति। मुक्तजीवः क्षोभविकारादिकं परित्यज्य परमपदं प्राप्नोति। उक्तं स्पन्दकारिकारेण– **''यदा क्षोभः प्रलीयेत तदा स्यात् परं पदम्''**[7]। परमपदञ्च स्व-स्वरूपावस्थितिरेव। तथाहि– **"परमपदं स्वस्वरूपे स्थितिर्भवेदित्यर्थः"**[8]। परमपदं शिवतत्त्वं भवति तस्य प्राप्त्यनन्तरं न पुनः दुःखादिकं उत्पद्यते, न वा दुःखादीनां संसर्गः सम्भवति। तादृशतत्त्वप्राप्त्या एव जीवः जीवन्मुक्तो भवति। उक्तञ्च स्पन्दकारिकाकारेण–

**न दुःखं न सुखं यत्र ना ग्राह्यं ग्राहकं न रच।**
**न चास्ति मूढभावोऽपि तदस्ति परमार्थतः।।**

जीवन्मुक्तजीवः योगिपदवाच्यो भवति। योगी स्वच्छन्दयोगबलाद् स्वच्छन्दरूपेण विचरति। स स्वच्छन्दपदे नित्ययुक्तो भवति। देहपाते च शिवस्वरूपत्वं प्राप्नोति। तथाहि–

**जीवन्नेव विमुक्तोऽसौ यस्येयं भावना सदा।**
**यः शिवं भावयेन्नित्यं न कालः कलयेत्तु तम्।।**

4. मालिनीविजयतन्त्रम् 1-47
5. स्वच्छन्दतन्त्रम् 11-61
6. स्वच्छदतन्त्रम् 10-377
7. स्पन्दकारिका 1-9
8. स्पन्दप्रदीपिका पृ. 21

**योगी स्वच्छन्दपदे युक्तः स्वच्छन्दतां ब्रजेत्।**
**स्वच्छन्दश्चैव स्वच्छन्दः स्वच्छन्दो विचरेत् सदा॥**

श्रीनेत्रतन्त्रे इत्थमपि प्रतिपादितं विद्यते यत् नेत्रस्य निमीलनावस्थायाम् उन्मीलनावस्थायां च सर्वत्र यदि पुरुषः शिवमयं पश्यति अनुभवति च तर्हि तादृशजीवस्य पुनर्जन्म नैव सम्भवतिः उक्तञ्च–

**निमेषोन्मेषमात्रेण यदि चैवोपलभ्यते।**
**ततः प्रभृति मुक्तोऽसौ न पुनर्जन्म चाप्नुयात्॥**[10]

अनेन ज्ञायते यद् अद्वैताभिमतस्पन्दशाखतन्त्रे शिवतत्त्वस्य उपासनेन मुक्तिः सम्भवति।

अद्वैताभिमतस्य द्वितीया शाखा वर्तते प्रत्यभिज्ञाशाखा। प्रत्यभिज्ञाशाखामते आत्मा शिवस्वरूप इति ज्ञानं प्रत्यभिज्ञा, अर्थात् सोऽयं शिवः जीव एव। शिवः स्वज्योतिर्द्वारा आच्छादितः सन् जीवभूतो भवति। अतः जीवः स्वरूपतः शिव एव। "शिव एव गृहीतः पशुभावः" इति वचनाद् ज्ञायते शिव एव पशुभावं सम्पादयति। पशुः स्वं शिवमिति मत्त्वा यदि साक्षात्कारं करोति तर्हि अयमेद वादः अस्याः शाखायाः मूलविषयः। स्वातन्त्र्यं स्वच्छन्दत्वं वा परमशिवस्य स्वरूपं भवति। परमशिवो हि द्रष्टा, दृश्यः, वेद्यः, प्रमाता, प्रमेयश्च भवति। एक एव शिवः प्रमाता प्रमेय द्रष्टा दृश्यमित्यादिरूपः कथं भवति इति जिज्ञासायामुच्यते परमशिवः स्वकीयस्वातन्त्र्यशक्तिवशाद् इदं जगत् प्रतिबिम्बरूपेण प्रकाशयति। उक्तञ्च–तन्त्रसारकारेण **"सर्वमिदं भवजातं बोधगगने प्रतिबिम्बमात्रम्"**[10] इति। तादृशशिवतत्त्वस्य स्वरूपप्राप्तिरेव मोक्षः। उक्तञ्च **"मोक्षो हि नाम नैवान्यः स्वरूपं प्रथनं हि तत्। स्वरूपं चात्मनः संवित्----------"**[11]।

आत्मसंवित्तत्त्वस्योदरेव मोक्षः। आत्मसंवित्तत्त्वस्योदयाद् मोक्षप्रतिबन्धकस्य अज्ञानात्मकमलस्य नाशः तेन मोक्षस्य प्राप्तिः। उक्तञ्च तन्त्रसारकारैः **"अज्ञानं किल बन्धहेतुरुदितः शास्त्रे मलं तत् स्मृतम्। पूर्णज्ञानकालोदये तदखिलं निर्मूलतां गच्छति। ध्वस्ताशेषमलात्मसंविदुदयं मोक्षश्च ----"**[12]। अनेन ज्ञायते यत् सततं परमशिवतत्त्स्य उपासना कर्तव्या। येन न पुनरपि जननं न पुनरपि मरणं सम्भवति।

मुक्त्यनन्तरं मुक्तजीवः कुत्र गच्छति, कुत्र तिष्ठति इति जिज्ञासायां प्रत्यभिज्ञाशाखावादिनः अभिनवगुप्ताः प्रवदन्ति–**"मोक्षस्य नैव किञ्चिद् धामोऽस्ति न चापि गमनमन्यत्र"**[13] इति। अत्रेदं

---

9. स्पन्दनिर्णयः पृ. 52
10. श्रीनेत्रतन्त्र 6.8
10. तन्त्रसारः कारिका 3
11. तन्त्रालोकः 1–156
12. तन्त्रासारः प्र. आ. पृ. 5
13. परमार्थसारः कारिका 60

बोध्यं यद् अद्वैततन्त्रकारैः अद्वैतवेदान्ताभिमतमतमभ्युपगत्य वैष्णवतन्त्रमतमपाकृतम्। यतः वैष्णवतन्त्रमते मुक्तजीवः वैकुण्ठं गोलोकं वा अध्यास्ते किन्तु अद्वैततन्त्रे तथा नास्ति। अभिनवगुप्तस्तु अज्ञानग्रन्थिभेदपूर्वकस्वशक्तेरभिव्यक्तता मोक्ष इति स्वीकृतवान्। उक्तञ्च परमार्थसारे-"**अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः**"[14] इति।

वस्तुतः प्रत्यभिज्ञावादिनः अभिनवगुप्तस्तु मुक्तावस्थायां जीवनस्य निर्विशेषरूपत्वात् शिवमुक्तयोरैक्यात् अद्वैतवेदान्तमतमभ्युपगत्य अद्वैततन्त्रसम्मतं मोक्षस्वरूपं प्रतिष्ठापितवन्तः। शिवदृष्टौ प्रतिपादितं यत्-

**वैलक्षण्यं गवादीनां न तथेऽस्ति किञ्चन।**
**मुक्तस्तु निर्विशेषत्वात् केनैक्यं तत्र वार्यते।।**[15] इत्यलमतिविस्तरेण

14. परमार्थसारः कारिका 60
15. शिवदृष्टिः 6-123

# दायविभागः पितृ-पितामहधनविभागकालश्च

डॉ॰ सुधांशुभूषणपण्डा

धर्मशास्त्रं कल्पाङ्गत्वने वैदिकमिति विपश्चितामाशयः। सकलशास्त्राणामनुमापकत्वेनामुस्मिक-फलप्रापकत्वेन पुरुषार्थानामुपादेयकत्वेन सकलशास्त्रललामभूतत्वेन प्रधानपुरुषार्थस्य धर्मस्य प्रतिपादकत्वेन च धर्मशास्त्रं विद्वद्दृष्ट्याकाशे ध्रुवतारकसदृशं विराजते। अस्यैव धर्मशास्त्रस्यापरा संज्ञा भवति स्मृतिः। यथोक्तं मनुना[1] "श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।"

तदेव धर्मशास्त्रं मुख्यतो भागत्रयेण विभज्यते आचारभागः, व्यवहारभागः प्रायश्चित्तभागश्चेति। आचारभागे वर्णधर्माश्रमधर्मवर्णाश्रमधर्मसाधारणधर्माणां, व्यवहारभागे गुणधर्माणां प्रायश्चित्तभागे च निमित्तधर्माणां विचारः कृतो वर्तते। गुणधर्ममध्ये अभिषेकादिगुणयुक्तस्य राज्ञो धर्मोऽन्तर्भवति। अतो गुणधर्मो राजधर्म एव। राज्ञः प्रजापालनं परमोधर्मः। दुष्टानां निग्रहं विना प्रजापालनं सम्यक् कर्त्तुं न शक्यते। दुष्टपरिज्ञानं विना च तेषां निग्रहो वा कथं सम्भवेत्, अतस्तत् परिज्ञानं व्यवहारं विना स सम्भवति। अतः राजधर्मेषु व्यवहारदर्शनं मुख्यं भवति उक्तञ्च–

**व्यवहारान्दिदृक्षुस्तु[2] ब्राह्मणैः सह पार्थिव।**
**मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम्॥** इति।

मनूपदिष्टादस्मात् वचनात् व्यवहारान् स्वयं पश्येत् सभ्यैः परिवृतोऽन्वहम्। याज्ञवल्क्योक्तवचनात्[3] व्यवहारदर्शनं राज्ञः परमकर्त्तव्यत्वेन च परिगणितं भवति। स च व्यवहारः कीदृशः, किं तस्य लक्षणं कानि च तस्य पदानीति मनुयाज्ञवल्क्यादिभिः स्व-स्वस्मृतिषु प्रतिपादितानि।

मनूक्ताष्टादशव्यवहारपदेषु[4] नारदोक्तसाध्यभेदेन[5] शतमष्टोत्तरप्रकारेषु वा व्यवहारपदेषु दायभागोऽन्यतमः। अष्टादशव्यवहारपदेषु 'विभागश्चेति[6]' शब्देन मनुना दायस्य स्थापना कृता। तत्रापि

1. मनु. स्मृ. – 2/10
2. मनु. स्मृ. – 8/10
3. या. स्मृ. – 2/1
4. मनु. स्मृ. – 8/4–7
5. ना. स्मृ. – 1/20
6. मनु. स्मृ. – 4/7

सप्तवित्तागमा[1] धर्म्या दायो लाभः क्रयोः जयः।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च॥

इत्यस्मात् वचनात् दायस्य सद्धनग्रहणोपायत्वेन परिगणना जातेति दृश्यते। पारस्कराचार्योऽपि अग्न्याधानस्य कालनिरुपणावसरे [2]आवसथ्याधानं दारकाले दायाद्यकाले वा एकेषामिति उक्त्वा दायाद्यकालस्यापि स्वीकारं करोति। कदाचित् विभागस्य निन्दावगाहकानां कृते उट्टङ्कितं भगवता मनुना [3]"पृथक् विवर्धते धर्मः तस्मात् धर्म्या पृथक् क्रिया" इति। श्रुतिरपि [4]"मनुः पुत्रेभ्यो दायमभजदि" त्युक्त्वा दायभागस्य गौरवमाचष्टे। वस्तुतस्तु अनादौ संसारे न हि सर्वे जनाः एकत्रैवावस्थातुमर्हन्ति। अतो विभागस्यावश्यकता नितरामेवास्तीत्यत्र नास्ति विसंवादः। तस्मात् दायभागमहत्त्वं प्रतिपादितं नारदेनयत्–

[5]विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते।
दायभाग इतिप्रोक्तं तद्विवादपदं बुधैः॥

एतेन पित्रादिधनानां पुत्रादिभिर्यो विभागः स एव दायभागपदेनोच्यते। भगवता मनुना व्यवहारस्याष्टादशभेदः प्रकल्पितः। ते यथा[6]–

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः।
संभूय च समुत्थानं दत्तस्यानपाकर्म च॥

वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥

सीमाविवादधर्मश्च पारूष्ये दण्डवाचिके।
स्तेयञ्च साहसं चैव स्त्रीसंग्रहणमेव च॥

स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च।
पदान्यष्टादशैतानि व्यवहारस्थिताविह॥ इति।

एतेषु विवादपदेषु 'विभागश्च' इति पदेन दायभागस्य गणना व्यवहारपदेषु भवतीति विज्ञायते। दायशब्दो दीयत इति व्युत्पत्त्या 'दा' धातोः 'घञ्' प्रत्ययेनैव निष्पद्यते।

---

1. मनु. स्मृ. 10/114
2. पा. गृ. सू. – 1/1/6
3. मनु. स्मृ. – 9/11
4. दायभागसमीक्षा – भूमिका पृ. 1
5. ना. स्मृ. – 4/13/1
6. मनु. स्मृ. – 8/4–7

विज्ञानेश्वरमतानुसारेण[1] दायशब्देन यद्धनं स्वामिसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यते। स च द्विविधः। अप्रतिबन्धः सप्रतिबन्धश्चेति। (या. स्मृ. मि. पृ. 265)

तत्र पुत्राणां पौत्राणां च पुत्रत्वेन च पौत्रत्वेन पितृधनं पितामहधनञ्च स्वं भवतीत्यप्रतिबन्धो दायः। पितृव्यभ्रात्रादीनान्तु पुत्राभावे स्वाम्यभावे च स्वं भवतीति सप्रतिबन्धो दाय इति।

जीमूतवाहनमतानुसारेण[2] दीयत इति व्युत्पत्त्या दायशब्दो, ददाति प्रयोगश्च गौणः। मृतप्रव्रजितादि-स्वस्वत्वनिवृत्तिपूर्वकपरस्वस्वोत्पत्तिफलसाम्यात्, न तु मृतादीनां तत्र त्यागोऽस्ति। ततश्च पूर्वस्वामिसम्बन्धाधीनं तत्स्वाम्युपरमे यत्र द्रव्ये स्वत्वं तत्र निरुढ़ो दायशब्द इति।

विज्ञानेश्वरमते विभागो नाम द्रव्यसमुदायविषयाणाम् अनेकस्वाम्यानां तदेकदेशेषु व्यवस्थापनमिति। विज्ञानेश्वरस्य अयमभिप्रायो यत् जन्मना जनस्य पैतृके धने स्वत्वं सामान्यं भवति। तस्य स्वत्वस्य द्रव्यसमुदायादाकृष्य द्रव्यविशेषेषु येन विधिना व्यवस्थापनं क्रियते स विधिर्विभाग इति।

जीमूतवाहनमते[3] एकेदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः। विशेषेण भजनं स्वत्वज्ञापनं वा विभाग इति।

मिताक्षराकारविज्ञानेश्वरेण पैतृके धने जन्मना स्वत्वमुत्पद्यत इति प्रतिपादितम्। तन्मते- "उत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्याः" इति मिताक्षरोधृतगौतमवचनानुसारं जन्मना स्वत्वं प्रतिपादितम्। यतो हि गौतमसूत्रस्यायमेवार्थो विज्ञानेश्वरेणाद्रियते यद्, यतः पुत्र पित्रा उत्पद्यते, तस्मादेव पुत्रस्य जन्मना एव स्वत्वमुत्पद्यते, जन्यजनकभावात्। पुनश्च प्रपञ्चेऽस्मिल्लोकेऽपि स्वत्वं तावद् जन्मना सर्वथा प्रसिद्धम्, तस्य लोकसिद्धत्वात्। यथा-

[4]ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः।
वृत्तिं तेऽपि हि काङ्क्षन्ति न दानं न च विक्रयः॥

अर्थात् वचनमिदं जन्मना स्वत्वपक्षं समर्थयति, यतो वचनेनायमेवार्थोऽवबोध्यते यत् ये खलु मातुर्गर्भाद्बहिरागतास्तथा येऽप्यनागतास्त एव सर्वे भरणपोषणनिमित्तं धनमिच्छन्ति, न दानं न विक्रयो वा धनस्य कर्तुं शक्यते तेषु सत्सु, तस्मात् कारणाद् जातस्याजातस्य वा स्वत्वं पैतृके धनेऽवश्यमस्तीति निश्चीयते। अपि च तेनैवोदाहृतम्-

---

1. या. स्मृ. मिता. पृ. 265
2. या. स्मृ. मिता. पृ. 265
3. दा. भा. पृ. 2
4. दा. भा. पृ. 6

[1]मणिमुक्ताप्रबालानां सर्वस्यैव पिता प्रभुः।
स्थावरस्य समग्रस्य न पिता न पितामहः॥

इति वचनाच्च मणिमुक्ताप्रबालादिजङ्गमधने केवलं पितुरेव स्वाम्यं, स्थावरेषु भूम्यादिषु यद्भूसंपत्त्यादयस्तत्र यथा पितुस्तथैव पुत्रादीनामपि स्वत्वं सामान्यमेव। तेन जन्मना स्वत्वं सिद्धमिति। किन्तु पुत्रस्य पित्राधीनत्वात् स्वातन्त्र्येण यथेष्टविनियोगार्हत्वं नास्ति। पितुस्तु पुत्रादीनां स्वत्वे सत्यपि स्वातन्त्र्यधर्मकृत्येषु वाचनिकेषु प्रसाददानकुटुम्बभरणपोषणादिष्वापद्विमोक्षादिषु नित्याग्निहोत्रेष्टिकादिषु चावश्यकीयस्थलेषु स्थावरव्यतिरिक्तद्रव्यविनियोगे कर्मसिद्धये धनव्ययेऽस्त्येवाधिकारः, तदभावे प्रत्यवायापत्तेः। आत्मनाऽर्जिते तु स्थावरे पुत्रादिप्राप्ते च पुत्रादीनां पारतन्त्र्यमेव। स्पष्टार्थमुदाहृतं मिताक्षराकारेण। वचनं यत्–

[2]स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम्।
असम्भूय सुतान्सर्वान्नदानं न च विक्रयः॥

जीमूतवाहनानुसारेण स्वाम्युपरमादेव स्वत्वमिति प्रतिपादनात् तदर्थं च तेन विभिन्नानां धर्मशास्त्राणां धर्मशास्त्रीयवचनानां प्रामाणिकत्वेन ग्रहणाच्च मरणप्रव्रज्यादिना स्वत्वनाशानन्तरं तेन सह संबंन्धादेव निमित्तात् पुत्रादीनां स्वत्वं भवति। "उत्पत्त्यैवार्थस्वामित्वं लभतेत्याचार्या" इति गौतमवचनस्येत्थं तेन महामहोपाध्यायेनैवार्थः क्रियते यत् पितृस्वत्वोपरमेऽङ्गजत्वहेतुभूतेनोत्पत्तिमात्रसंबन्धनिबन्धनेन जनकधने जन्यानां पुत्रादीनां स्वाम्यात् तद्धनमेव पुत्रादयः लभन्ते, नान्यसम्बन्धीत्याचार्याणामभिमतम्। अतो वचनमिदं जन्मना स्वत्वं न प्रतिपादयति। अपि तु जीवति पितरि पुत्राणां धनव्यये स्वाधीनतामेव वारयति। यथोक्तं मनुना–

उर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।
भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः॥

मनुवचनेनानेन[3] जीवतो पितृधने पुत्राणामस्वाम्यं प्रतिपादितम्। अपि च जन्मना स्वत्वे सिद्धेऽपि "जातपुत्रः कृष्णकेशोऽग्नीनाधीत" इत्यादिश्रुतिवचनाद्धनसाध्येऽग्न्याधानादिवैधकर्मण्यपि पितुरनधिकारः प्रसज्यते, तदानीं द्रव्यसमुदाये पितापुत्रयोः साधारणत्वादनेकसाधारणधनव्ययकरणे चान्याय्यत्वात्। न च सद्यः जातः शिशुः धनव्ययकर्मणि पितुरनुमातुं शक्नुयात्। न वा लोके वस्तुतः पिता शिशुपुत्रस्यानुमतिमपेक्षते। पुनश्च पित्रादिनिधनानन्तरमेवास्मदीयं धनमिति लोके प्रयोगात्। एकपुत्रे च विभागं विनैव स्वत्वस्वीकरणाच्च सम्बन्धिनिधनमेव स्वत्वकारणमिति व्याचक्ष्याणः जन्मना स्वत्वं विभागस्य स्वत्वे कारणं च निरस्य जीवति पितरि पुत्राणां धनेऽस्वामित्वमिति द्रढयति।

1. मिता. पि. 219, श्लोकोऽयं याज्ञवल्क्येनोक्त इति जीमूतवाहनेन (दायभागे. पृ. 10) लिखितः, परन्तूपलब्धयाज्ञवल्क्यस्मृतौ श्लोकोऽयं नोपलभ्यतेऽधुना।
2. या. स्मृ. मिता. पृ. 219
3. मनु. स्मृ. – 9/104

किञ्चापि जन्मनैव स्वत्वमिति प्रमाणाभावाच्च न जन्मना स्वत्वम्, परन्तु मृतत्व प्रव्रजितत्वनिस्पृहत्वादिना स्वामिस्वत्वनाशनात् स्वत्वमुत्पद्यते। यथा पुत्राणां पौत्राणाञ्च पुत्रत्वेन पौत्रत्वेन च पितृधने पितामहधने च दानादिव्यतिरेकेण यत् स्वं भवतीत्युक्तं तदप्रतिबन्धदाय इति। क्रयो नाम समुचितमूल्यदानेन द्रव्यस्वीकारः। संविभागस्तु सप्रतिबन्धदायस्य विभागोऽर्थात् पितृव्यधने तत्पुत्राद्यभावे भ्रातृपुत्राधिकारो यस्मिन् स उच्यते। परिग्रहो ह्यनन्यसाधारणस्यारण्यादेः तृणकाष्ठादेर्वा प्रथमं ममेति बुद्ध्या ग्रहणम्। अधिगमपदेन तु प्रणष्टस्वामिकस्य निध्यादेः प्राप्तिः। एते गौतमोक्ताश्च सर्वेषां ब्राह्मणादिवर्णानां साधारण्येन स्वत्वहेतवो भवन्तीति प्रतिपाद्यासाधारणस्वत्वज्ञापनार्थं वर्णविशेषस्य कृते प्रतिग्रहादीना ब्राह्मणस्याधिकं लब्धमिति। क्षत्रियस्य विजितेऽधिकमिति निर्विष्टं वैश्यशूद्रयोः इति वैश्यस्य कृषिवाणिज्यादिना इति जीमूतवाहनस्याशयः। अनेन यत् स्वत्वं प्रतिपादितं स्वाम्युपरमादिति तेन पुत्रः पैतृके धने सर्वतोभावेनाधिकारी भवितुमर्हति। तस्मादेव स्वाम्युपरमानन्तरं स्वत्वस्य यथेष्टविनियोगप्रमाण–सत्वादिदमेव जीमूतवाहनेन विचारितम्।

स्वत्वं शास्त्रैकसमधिगम्यं लौकिकं वेत्युपस्थितायां शंङ्कायां स्वत्वं तावत् शास्त्रैकसमधि–गम्यमिति निरवद्यविद्योतितेन जीमूतवाहनेनाङ्गीकृतं, तस्य शास्त्रमूलत्वादिति तदुक्तेः। तदर्थं तावत् "स्वामीरिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयो" रिति गौतमवचनं प्रमाणत्वेन स्वीकृतम्। लौकिकत्वे स्वत्वस्य वचनमिदं निरर्थकं स्यादिति तस्याभिप्रायः। तस्यैव गौतमवचनस्य व्याख्यावसरे स्वयमेव ब्रूते रिक्थं नामाप्रतिबन्धो दायः यथा पुत्राणां पौत्राणाञ्च पुत्रत्वेन पौत्रत्वेन च पितृधने पितामहधने च दानादिव्यतिरेकेण यत् स्वं भवतीत्युक्तं तदप्रतिबन्धो दाय इति। क्रयो नाम समुचितमूल्यदानेन द्रव्यस्वीकारः। संविभागस्तु सप्रतिबन्धदायस्य विभगोऽर्थात् पितृव्यधने तत्पुत्राद्यभावे भ्रातृपुत्राधिकारो यस्मिन् स उच्यते। परिग्रहो ह्यनन्यसाधारणस्यारण्यादेः तृणकाष्ठादेर्वा प्रथमं ममेति बुद्ध्या ग्रहणम्। अधिगमपदेन तु प्रणष्टस्वामिकस्य निध्यादेः प्राप्तिः। एते गौतमोक्ताश्च सर्वेषां ब्राह्मणादिवर्णानां साधारण्येन स्वत्वहेतवो भवन्तीति प्रतिपाद्यासाधारणस्वत्वज्ञापनार्थं वर्णविशेषस्य कृते प्रतिग्रहादिना ब्राह्मणस्याधिकं[1] लब्धमिति। 'क्षत्रियस्य[2] विजितं' इति धर्मयुद्धार्जितं क्षत्रियस्याधिकमिति। निर्विष्टं[3] वैश्यशूद्रयौः' इति वैश्यस्य कृषिवाणिज्यादिना शूद्रस्य च दासवृत्त्या भृतिसदृशं विवक्षितम्।

अधिकमेवमनुलोमजानाञ्च लोकप्रसिद्धस्वत्वहेतुत्वेन प्रतिपादितम्। अतः 'सूतानामश्वसारथ्यम्' इत्यादि तत्तत्सर्वं निर्विष्टशब्देनोच्यते सर्वस्यापि भृतिरुपत्वाद् 'निर्वेशो भृतिभोगयोः' इति त्रिकाण्डस्मरणात्।

गौतमवचनत्वेनैतानि स्वत्वनिमित्तानि प्रकल्पितानि, ततः स्वत्वं तावत् शास्त्रैकसमधिगम्यमिति नास्ति संशयलेशः। पुनश्च व्यतिरेकविचारदृष्ट्या एतदेव वक्तुं शक्यते यद् यदि नाम स्वत्वं शास्त्रीयं न स्यात्तर्हि–

---

1. गौ. ध. सू. 2/1/40
2. गौ. ध. सू. 2/1/41
3. गौ. ध. सू. 2/1/42

**[1]योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्।**
**याजनाध्यापनेनापि यथा स्तेनस्तथैव सः॥**

इति मनुवचनमत्र न संगच्छेत्, तत्र स्वत्वस्य शास्त्रीयत्वाभावाद् याजनाध्यापनादिवैधकर्मणि गृहीतधने दोषाभावः प्रसज्येत।

**[2]यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्।**
**तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपस्यैव च॥**

इत्यत्र मिताक्षरोक्तवचनानुसारेण द्रव्यदातुश्चौर्यादिधने स्वत्वाभावात् तत्प्रतिग्रहकारिणोऽपि न केवलं स्वत्वाभावः प्रत्युतदोष एव। पुनश्च लौकिकत्वे स्वत्वस्य मम धनमनेन गृहीतमिति न हि कश्चन वक्तुं शक्नुयात्, यथा रामेण श्यामस्य किमपि धनमपहृतम्, अत्रास्मिन् स्थले यदि स्वत्वं शास्त्रीयमिति न कोऽप्यनुमनुते, तर्हिरपहर्तुः रामविषये श्यामेनाप्यभियोगः कर्तुं न पार्येत, शास्त्रीयत्वाभात्तदानीमपहर्तुः रामस्येव स्वत्वात्।

अतः स्वत्वं शास्त्रैकसमधिगम्यमिति मतं जीमूतवाहनेन स्वीक्रियते। विज्ञानेश्वरेण तु नैतन्मतं स्वीक्रियते। विज्ञानेश्वरमतानुसारं स्वत्वं तावल्लौकिकं, लौकिकार्थक्रियासाधनत्वाद् ब्रीह्यादिवत्। यथाह्याहवनीयादीनां शास्त्रैकसमधिगम्यत्वेऽपि यत्पाकादिलौकिकक्रियाकारित्वं दृश्यते तन्नाहवनीयत्वादिरुपेणापि तु सामान्यलौकिकाग्नित्वादिरुपेण, तथैव स्वत्वस्य शास्त्रैकसमधिगम्यत्वेऽपि लौकिकव्यवहार्यत्वात् तस्य लौकिकत्वं स्वीकार्यमिति मिताक्षराकृतोऽभिप्रायः। पुनश्चादृष्टशास्त्रव्यवहाराणां प्रत्यन्तवासिनां मर्य्यादाक्षरपरिचयरहितानां मूर्खाणां क्रयविक्रयादौ लोके स्वत्वव्यवहारो दृश्यते, न केवलं शास्त्राभिज्ञानाम्। अतः न तावत् स्वत्वं शास्त्रीयम्, अपि तु लोकिकम्। लोकेऽशास्त्रीयैरपि जनैस्तस्य व्यवहारदर्शनात्। अतो नियतोपायकं स्वत्वं लोकसिद्धमेवेति न्यायविदो मन्यन्ते, अपरञ्चापि यस्मिन् द्रव्ये यस्य स्वत्वं नास्ति तस्मिन् द्रव्ये क्रयाद्यर्थक्रियां नासौ साधयितुं शक्नोति। तस्माद् यथेष्टविनियोगार्हत्वमेव स्वत्वमिति तावत् लोकप्रथितम्।

अपि च क्रतुसिद्ध्यर्थे द्रव्यार्जने नियमातिक्रमार्जितेनापि द्रव्येण क्रतुसिद्धिर्न भवति। तत्र पुरुषस्य नियमातिक्रमे दोषः स्वत्वस्य लौकिकत्वादिति मीमांसकानां सिद्धान्तः। अनेक चौर्यादिलब्धधने स्वत्वं स्यादिति न मन्तव्यम्, तत्र लोकेऽपि स्वत्वप्रसिद्धेरभावात्, न हि कश्चित् चौर्यधने चौरस्य स्वत्वमस्तीति मनुते, न वा स्तेनः चौर्यस्य धनस्य यथेष्टविनियोगं कर्तुं पारयति।

तस्माद् गौतमोक्तस्वत्वसाधनसूत्रं स्वत्वहेतुरुपेण लोकसिद्धमप्यनुवादत्वेनानुगृहीतम्। अतः स्वत्वं लौकिकं नियतोपायकञ्चेति मन्तव्यमिति विज्ञानेश्वरस्याभिमतम्।

---

1. मनु. स्मृ. – 8/340
2. मिता. पृ. 217

विभागात् स्वत्वमुत स्वस्य सतो विभाग इति समुपस्थिते सन्देहे विभागात् स्वत्वमिति जीमूतवाहनस्याशयः, कथमिति चेदुच्यते "पितर्यूर्ध्वं गते पुत्रा विभजेयुर्धनं पितुः" इति नारदवचनात् विभागात्पूर्वं न पुत्राणां स्वत्वमिति तेनैवोक्तत्वात्। यदि जन्मना स्वत्वं स्यात्तर्हि तदोत्पन्नस्य पुत्रस्यापि स्वत्वं साधारणमिति द्रव्यसाध्येष्वाधानादिषु पितुरनधिकारप्रसङ्गात्। तथा विभागात्प्राक् पितृप्रसादलब्धस्य विभागप्रतिबन्धो नोपपद्यते, यतो हि सर्वानुमत्या दत्तत्वाद्विभागप्राप्त्यभावः। तथा

**[1]शौर्यभार्याधने चोभे यच्च विद्याधनं भवेत्।**
**त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः॥**

इति नारदवचनेन जन्मनैव स्वत्वं नोपपद्यते। पुनश्च–

**[2]भर्ता प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्।**
**सा यथाकालमश्नीयाद् दद्याद्वा स्थावरादृते॥**

अत्रास्मिन् प्रीतिदानवचने स्थावरादृते संबन्धयुक्तो व्यवहितयोजनाप्रसङ्गात् तत्र यद्यपि–

**[3]मणिमुक्ताप्रबालानां सर्वस्यैव पिता प्रभुः।**
**स्थावरस्य तु सर्वस्य न पिता न पितामहः॥**

इतीदं स्थावरस्य प्रतिषेधवचनम्, यत्पितामहोपात्तस्थावरविषयमस्ति।

अतीते पितामहे तद्धनं पितापुत्रयोः साधारणमिति मणिमुक्तादिः पितुरेव, स्थावरं तु साधारणमित्यस्मादेव वचनादवगम्यते। तस्मान्न जन्मना स्वत्वम्, किन्तु स्वाम्युपरमाद्विभागात् स्वत्वमिति तेनैवोक्तम् विज्ञानेश्वरमतानुसारेण विभागस्य स्वत्वकारणता नास्ति। यतः क्वापि शास्त्रे रिक्थक्रयादिवद् विभागस्य स्वत्वकारणं नोक्तम्।

यदि विभागात् स्वत्वं स्यात्तर्हि चौराणामपि चौर्यधनस्य विभागान्तरं स्वत्वमापद्येत। अतो विभागान्न स्वत्वम्। परन्तु स्वत्वे सति विभाग इति सर्वथा युज्यते। यतः "शिरो नास्ति शिरः पीड़ा" इति न्यायानुसारं स्वत्वाभावे कुतो विभागप्रसङ्गः। अपरञ्चापि विभागात् स्वत्वे सति स्वत्वविहीनस्यापि अपरस्य धनविभागे स्वत्वागमनं भवेत्। तस्मात्तन्निराकरणाय स्वत्वे सति विभाग इति विज्ञानेश्वरपक्षः साधीयानिति।

---

1. ना. स्मृ. 4/13/6
2. दायभागविमर्शः पृ. 125
3. मिता. पृ. 216, श्लोकोऽयं याज्ञवल्क्येनोक्त इति जीमूतवाहनेन(दायभागे पृ. 10) लिखितः, परन्तूपलब्धयाज्ञवल्क्यस्मृतौ श्लोकोऽयं नोपलभ्यतेऽधुना।

**धनविभागकालः**

विज्ञानेश्वरेण प्रथमं तद्विषयेआलोच्यते यत्– "ऊर्ध्वं पितुः पुत्राः रिक्थं विभजेरन्" इति गौतमवचनेन पित्रोर्मरणानन्तरं पुत्राणामिच्छयेत्येको विभागकालः। अत्र पुत्राणां कर्तृत्वेन ग्रहणमर्थात् पुत्रा अत्र कर्तारः पित्रोरुर्ध्वं समानभावेन ऋणं, रिक्थं च विभजेयुः, यतो हि सममिति प्रकाशनियमः। सममेवेति रिक्थमृणं च विभजेरन् इति मनुवचनादपि प्रतीयते।

**[1]ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।**
**भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः॥**

इत्युपक्रम्य पुनरपि तेनोक्तं यत्–

**[2]ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः।**
**शेषास्तमुपजीवेयुर्यथैव पितरं तथा॥**

अत्राभ्यां मनुवचनाभ्यां ज्ञायते यद् ज्येष्ठ एव पित्रोः स्वत्वनाशानन्तरमधिकारी भवति। ततः सर्वे भ्रातरः मिलित्वा विभागं कुर्वन्ति। विभागकाले सर्वस्माद्द्रव्यसमुदायाद्विंशतितमोभागः सर्वद्रव्येषु च यच्छ्रेष्ठं तज्जेष्ठाय दातव्यम्। ततः चत्वारिंशत्तमो भागो मध्यमं च द्रव्यं मध्यमाय दातव्यम्, ततः तुरीयमशीतितमो भागो हीनं द्रव्यं च कनिष्ठाय दातव्यम्। विषयेऽस्मिन् मनुनोक्तम्–

**[3]ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्।**
**ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः॥**

किञ्चापि पित्रोरुर्ध्वं ज्येष्ठः द्वौ भागौ गृह्णीयात्, तदनन्तरं जातस्य सार्धैकभागस्ततोऽनुजानामेकैको भाग इत्युद्धारव्यतिरेकेणापि विषमविभागो दर्शितः। उद्धारेऽनुद्धृते त्वेषामिति मनुवचनेन "ज्येष्ठं वा श्रेष्ठभागेनेति" याज्ञवल्क्यवचनानुसारं च विषमविभागः प्रमाणितः। अतः इदानीं प्रश्नः समुदेति यत्, विभागो विषमस्तर्हि कथं समं विभजेरन्निति नियम्यते? अत्रोच्यते सत्यमेतत् कारणमयं विषमविभागो यद्यपि शास्त्रदृष्टस्तथापि लोकविद्विष्टत्वान्नानुष्ठेयः, [4]"अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु" इति याज्ञवल्क्यनिषेधात्। यथोक्तं "महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्" इति विधानेऽपि लोकविद्वेषान्नानुष्ठीयते कलौ। यद्यपि ज्येष्ठः दद्यादिति देशविशेषानुसारं केचनामनन्ति तथापि शास्त्रविरोधान्निराकृष्टम्। तस्माद् विषमविभागः शास्त्रदृष्टोऽपि लोकविरोधाच्छ्रुतिविरोधाच्च नानुष्ठेयोऽपितु सममेव विभजेरन्निति विधिः कलौ दृश्यते।

---

1. मनु. स्मृ. - 1/103
2. मनु. स्मृ. - 1/105
3. मनु. स्मृ. - 9/112
4. या. स्मृ. - 1/156

पितृधनं पुत्राः विभजेयुरित्युक्तम्। किन्तु क्वचिद् मातृधनेऽपवादो दृश्यते। मातुर्धनं दुहितरो विभजेरन्निति, अर्थाद् मात्रा यदृणं कृतं तदपनीयावशिष्टं सर्वं दुहितरः प्रथमं गृह्णीयुरिति। तत्रापि दुहितृषु प्रथमं तावत् प्रत्तानां ततः परमप्रतिष्ठितानां निर्द्धनानां, ततः प्रतिष्ठितानामिति क्रमः। सर्वदुहित्रभावे पुत्राः गृह्णीयुरिति सर्वसम्मतम्। अत "ऊर्ध्वं पितुः पुत्राः रिक्थं विभजेरन्" इति गौतमवचनेन, "विभजेरन् सुताः पित्रोरुर्ध्वमित्यनेन च याज्ञवल्क्यवचनेन पित्रोर्मरणानन्तरं पुत्राणामित्येको विभागकालः। "निवृत्ते चापि रजसीति" गौतमोक्त्या मातरि निवृत्तरजस्कायां पितरि धननिस्पृहे तदनिच्छयापि पुत्राणामिच्छया द्वितीयो विभागकालो विज्ञानेश्वरेण प्रदर्शितः। यतः जीवत्यपि पितरि द्रव्यनिस्पृहे निवृत्तरमणे, मातरि च निवृत्तरजस्कायाम्, पितुरनिच्छायामपि पुत्रेच्छानुसारेण विभागो भवति। तच्च नारदेन समर्थितम्, "अत ऊर्ध्वं पितुः पुत्राः विभजेयुर्धनं समम्" इति पित्रोरुर्ध्वं विभागं प्रतिपाद्य मातुर्निवृत्ते रजसि भगनीषु ,च।।"

"निवृत्ते चापि रमणे पितर्युपरतस्पृहे" इति दर्शितः। अत्र पुत्राः धनं समं विभजेयुरित्यनुषज्यते। अतोऽयं पुत्राणामिच्छया विभागस्य कृते द्वितीयकाल उक्तः। "जीवति चेच्छति" इति गौतमोक्त्या जीवति पितरि तदिच्छेति विभागस्य तृतीयकालो दर्शितः। पित्रा यदि विभाग इष्यते तर्हि तेन सुता विभजनीया, अर्थात् सः पिता स्वेच्छया आत्मनः सुतान्विभजेदिति । इच्छया विभजेदिति इच्छायाः निरङ्कुशत्वादनियमौ प्राप्तौ भवतः, ज्येष्ठं श्रेष्ठभागेन, सर्वे वा स्युः समांशिनश्च।

**[1]विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान्।**
**ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः।।**

इति याज्ञवल्क्यवचनेन विभागद्वयं समविषमभावेन प्रकटितम्। विषमभागश्चायं ज्येष्ठं श्रेष्ठभागेन, मध्यमं मध्यभागेन, कनिष्ठं कनिष्ठभागेनिति स्वार्जितद्रव्यविषयपरको भवति, किन्तु परम्परागतपैतृके पैतामहादिधने पितुः पुत्रस्य च समस्वाम्यत्वकीर्तनान्न तत्र विषमविभागो भवतीत्युक्तम्।

**[2]यदि कुर्यात्समानंशान् पत्न्यः कार्याः समांशिकाः।**
**न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा।।**

इति याज्ञवल्क्यवचनेन पत्नीनां पुत्रसमांशकीर्तनदर्शनादवगम्यते यद् यदा पिता पुत्रान् विभजति तदा तत्समं धनमपि पत्न्यै देयम्। पत्न्यः यदि बह्वय् स्युः तदानीं ताः सर्वाः पुत्रसमांशभाजः करणीयाः। याभिः भर्त्तुः श्वशुराद् वा किमपि स्त्रीधनं न स्वीकृतम्, यदि किञ्चिद्धनं लब्धमस्ति तर्हि ताभ्य अर्धांशः देयः। 'दत्ते त्वर्धं प्रकल्प्येत्' इति याज्ञवल्क्यवचनं अर्धपदमत्र यावता दत्तेन पुत्रतुल्यांशः स्यात्तावदेव देयमिति तात्पर्यम्।

---

1. या. स्मृ. – 2/114
2. या. स्मृ – 2/115

